तन्नामानि च[१] मिन्द्राणी सरमा[क]रोमशो[ख]र्वशी[ग] ॥७९॥
भवत्यथा[घ]सिनीवाली[२][ङ] राका[च] चानुमतिः[३][छ] कुहूः ।
गौर्धेनुर्देवपत्न्योऽन्या[४] पथ्या स्वस्ति च[५] रोदसी ।
नैपातिकानि चाभाञ्जि[६] येषां नामानि कानिचित् ॥८०॥
यदा तु वाग्भवत्येषा[७] सूर्याऽमुं लोकमाश्रिता ।
तदा सूक्तमुषा[८][ज] भूत्वा सूर्या[झ] च भजतेऽखिलम् ॥८१॥
वृषाकपाय्यृचं[ञ] भूत्वा सरण्यू[ट]र्द्वे च ते भुवम्[९] ।

---

(१) सूक्तार्धानीयमिति क० घ० । सूक्तार्धाणीयमितिपाठो विशुद्धः ।

(२) ऋचवत्यग्रा(ठ)सिनीवालीति क० घ०, भवत्यगन्या सिनीवालीति ख०, भवत्यग्रा सिनीवालीति ग० ।

(३) राकोचानुमतिरिति क०, राकोचानुमितिरिति घ०, राका चानुमितिरिति पुस्तकान्तरम् ।

(४) गोरीगौर्धेनुपत्नग्रोऽन्या इति क० घ०, देवपत्नग्रोग्ना इति ङ० पुस्तकान्तरञ्च ।

(५) स्वस्ति चेति ख०,स्वस्तिश्चेति ग० ङ० पुस्तकान्तरञ्च ।

(६) नैपातिकान् पृथग्भाञ्जीति क० ।

(७) भजत्येषेति क० घ० ।

(८) सूक्तमुखेति ख० ग०, तथा सूक्तमुषेति ङ० पुस्तकान्तरञ्च ।

(९) त्वेव तदृचमिति क० घ०, ते भुवमिति पुस्तकान्तरम् ।

---

(क) ऋ० १, ६२, ३ । (ख) ऋ० १, १२६, ७ । (ग) ऋ० ५, ४१, १९ ।
(घ) ऋ० ३, ५४, ५ । (ङ) ऋ० ११, ३२, ८ । (च) ऋ० ११, ३२, ८ ।
(छ) ऋ० १०, ५९, ६ । (ज) ऋ० १, १८१, ६ । (झ) ४, ४४, १ ।
(ञ) ऋ० ७, ६६, ११ । (ट) ऋ० १०, १७, २ । (ठ) ऋ० ७,८७,४ ।

निपातमात्रं भजते द्यविश्च[१] पृथिवी सती ॥ ८२ ॥
सूर्य्यामिव[२] सतीमेतां गौरीं वाचं सरस्वतीम् ।
पश्यामो वैश्वदेवेषु निपातेनैव केवलाः[३] ॥ ८३ ॥
घोषा[क] गोधा[ख] विश्ववारा[ग] पालोपनिषवन्निषत्[४] ।
ब्रह्मजाया[घ] जुहू[ङ]र्नामागस्त्यस्य[५][च] स्वसाऽदितिः[छ] ॥ ८४ ॥
इन्द्राणी चेन्द्रमाता[६] च सरमा[ज] रोमशो[झ]र्व्वशी[ञ] ।
लोपामुद्रा[ट] च नद्यश्च यमी[ठ] नारी च शाश्वती[७][ड] ॥ ८५ ॥
श्रीर्लक्ष्मीः सार्पराज्ञी[८] वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्य्या[ढ] च सावित्री ब्रह्मवादिन्य ईरिताः ॥ ८६ ॥

---

(१) द्यविन्तु इति क० घ०, द्युवश्चेति ग० ।
(२) पृथिवी त्विति क० घ० ।
(३) केवलामिति क० घ० ।
(४) पालोपनिषन्निषत् इति क० ख० घ० ङ० ।
(५) छन्दोऽनुरोधात् नाम अगस्त्यस्येति पाठः समीचीनः ।
(६) चन्द्रमातेति ख० ।
(७) शश्वतीति क० घ०, तथैव चेति ख० ।
(८) सार्व्वराज्ञेति ख० ।

---

(क) ऋ० १०, ४०, ५ । (ख) ऋ० ८, ६६, ६ । (ग) ऋ० ५, ४, ३ ।
(घ) ऋ० १०, १०६, ३ । (ङ) ऋ० १, ५८, ४ । (च) १०, ६०, ६ ।
(छ) ऋ० १, ४१, २ । (ज) ऋ० १, ६२, ३ । (झ) ऋ० १, १२६, ७ ।
(ञ) ऋ० ५, ४२, १६ । (ट) ऋ० १, १७६, ४ । (ठ) ऋ० १०, १०, ६ ।
(ड) ८, १, ४१ । (ढ) ऋ० ४, ४४, १ ।

नवकः प्रथमस्त्वासां[1] वर्ग[2] स्तुष्टाव देवताः।
ऋषिभिर्देवताभिश्च समूदे[3]मध्यमो गणः॥ ८७॥
आत्मनो भाववृत्तानि जगौ वर्गस्तथोत्तमः।
उत्तमस्य तु वर्गस्य य ऋषिः सैव[4] देवता[5]॥ ८८॥
आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तमः[6]।
तस्मादात्मस्तवेषु स्याद्य ऋषि. सैव[7] देवता॥ ८९॥
संवादेष्वाह वाक्यं यः स तु तस्मिन् भवेदृषिः[8]।
यस्तेनोच्येत वाक्येन देवता तत्र[9] सा भवेत्॥ ९०॥
उच्चावचेषु चार्थेषु निपाताः समुदाहृताः।
कर्मोपसंग्रहणार्थे च[10] क्वचिच्चौपम्यकारणात्॥ ९१॥
ऊनानां पूरणार्थावा[11] पादानामपरे क्वचित्।

(१) तासामिति ख०।
(२) वर्गाः इति क० घ०।
(३) समूहे इति क०, समुद्रे इति ख०।
(४) ऋषिश्चैव चेति घ०।
(५) आत्मनो भाववृत्तानीत्यादि य ऋषिः सैव देवता इत्यन्तपाठः क० घ० पुस्तकयोर्न विद्यते।
(६) देवता चोत्तमस्तु यः इति क० घ०।
(७) आत्मस्तवेष्वेवं भवेदृष्टैवेति क० घ०।
(८) भवत्यृषिरिति क० घ०।
(९) तेष्विति क० घ०।
(१०) कर्मोपसंग्रहार्थेष्विति क० घ०।
(११) पूरणार्थेष्विति क० घ०।

मिताक्षरेषु ग्रन्थेषु पूरणार्थास्त्वनर्थकाः[१] ॥९२॥
कमीमिद्विति[२]विज्ञेया ये त्वनेकार्थकाश्च ते[३] ।
इव न चित्तु चत्वार[४] उपमार्था भवन्त्यमी[५] ॥९३॥
उपमार्थं[६] नकारस्तु क्वचिदेव निपात्यते ।
मिताक्षरेषु ग्रन्थेषु प्रतिषेधस्त्वनेकशः[७] ॥९४॥
इयन्त[८] इति सङ्ख्यानं निपातानां न विद्यते ।
प्रयोजनवशा ह्येते[९] निपात्यन्ते पदे पदे ॥९५॥
उपसर्गास्तु विज्ञेयाः क्रियायोगेषु[१०] विंशतिः ।
विशेषयन्ति ते त्वर्थां[११]न्नामाख्यातविभक्तिभिः[१२] ॥९६॥

---

(१) पूरणार्थं त्वनर्थकाः इति क० घ० ।
(२) चामिमिद्वतीति ख० ।
(३) त्वन्ये सार्थकाः स्तुतौ इति क० घ० ।
(४) इवोनचिन्नुचत्वार इति ग० । इवेनचिन्नुचत्वार इति ङ० ।
(५) भवन्ति ते इति ख० ग० ङ० ।
(६) उपमार्थे इति ग० ङ० ।
(७) चानकशः इति ख० ग० ङ० ।
(८) इयन्तु इति ख० ।
(९) वशात् प्रकरणस्यैते इति ग० ङ० । वशाः प्रकरणस्यैते इति ख० ।
(१०) क्रियायोगेनेति ख० ग० ङ० ।
(११) ते त्वर्थमिति ग० ङ० । स्वर्थानिति घ० ।
(१२) विभक्तितः इति घ० । विभक्तिषु इति ख० ग० ङ० ।

(१)(अनु[क] श्र[ख] दन्त[ग])रित्येतानाचार्य्यः शाकटायनः ।
उपसर्गाः क्रियायोगान्मेने तेन त्रयोऽधिकाः ॥९७॥
त्रीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम् ।
नामसूक्तप्रयोगेषु वाच्यं प्रकरणं तथा ॥९८॥
तेषान्तु नामभिर्लिङ्गैर्ग्रहणं सर्वनामभिः ।
कृताकृतस्य सदृशो गृहीतस्य पुनर्ग्रहः ॥९९॥
पादसूक्तर्ग्वर्गार्धर्चनामान्यन्यानि यानि च ।
सर्वं नामानि चैवाहुरन्ये चैवं यथा कथा ॥१००॥
प्रधानमर्थः शब्दो हि तद्गुणायत्त इष्यते ।
तस्मान्नानान्वयोपायः शब्दानर्थवशं नयेत् ॥१०१॥
अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् ।
विप्रकृष्टञ्च सन्दध्यादानुपूर्वीञ्च कल्पयेत् ॥१०२॥
लिङ्गं धातुं विभक्तिञ्च सन्नयेत् तत्र तत्र च ।
यथान्याय्यान्वयं वाक्यं कुर्य्यात् तत्तत्तु लौकिकम् ॥१०३॥
यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् ।
अर्थश्चाप्यभिधेयश्च तावद्भिर्गुणविग्रहः ॥१०४॥
धातूपसर्गावयवगुणशब्दाद्द्विधातुजम् ।
बह्वेकधातुजं वापि पदनिर्वाच्यलक्षणम् ॥१०५॥
धातुजं धातुजाज्जातं समस्तार्थजमेव वा ।

(१) ९६ सङ्ख्यकश्लोकात् १२७ सङ्ख्यकश्लोकपर्य्यन्तं श्लोकाः क० घ० चिह्नितयोः पुस्तकयोर्नोपलभ्यन्ते । एते ख० ग० ङ० चिह्नितेषु पुस्तकेषूपलभ्यन्ते ।

(क) ऋ० १, ६, ४ । (ख) ऋ० १, ५५, ५ । (ग) ऋ० १, ५४, १ ।

वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥१०६॥
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥१०७॥
विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते।
प्रविभज्यैव निर्ब्रूयाद्दण्डार्हो दण्ड्य इत्यपि ॥१०८॥
भार्य्या रूपवती चास्य रूपवद्भार्य्य इत्यपि।
इन्द्रस्य सोमस्येत्येवमिन्द्रासोमौ निदर्शनम् ॥१०९॥
शब्दरूपं पदार्थस्य व्युत्पत्तिः प्रकृतिर्गुणः।
सर्व्वमेतदनेकार्थं दृश्यानवगमे गुणाः ॥११०॥
सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित्।
पलायने यथावृत्ति कोनुमर्या इतीष्यते ॥१११॥
विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित्।
हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम् ॥११२॥
पदमेकं समादाय द्विधा कृत्वा निरुक्तवान्।
पुरुषादः(क) पदं यास्को वृचे वृचे इति त्वृचि ॥११३॥
अनेकं सत्तथा चान्यदेकमेव निरुक्तवान्।
अरुणो मासकृत्मन्त्रे मासकृद्विग्रहेण तु ॥११४॥
पदव्यवायेऽपि पदे एकीकृत्य निरुक्तवान्।
गर्भं निधानमित्येते न आमय(ख) इति त्वृचि ॥११५॥
पदजातिरविज्ञाता त्वः पदार्थः सिनामनि।

---

(क) ऋ० १०, २७, २२। (ख) ऋ० १, २३, १६।

स्वरानवगमो धाचि[क] वमेनेत्यृचि दर्शितः ॥११६॥
शुनःशेफं[ख] नराशंसं[ग] व्याख्यानः पृथिवीति च।
निरुक्तेति प्रभृतिस्वर्थादासीत् क्रमो यथा ॥११७॥
वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्य च।
अचाणीतिकपिर्नाभाद्[घ]नोयामित्यघासु च ॥११८॥
अर्थात् पदं स्वाभिधेयं पदाद्वाक्यार्थनिर्णयः।
पदसङ्घातजं वाक्यं वर्णसङ्घातजं पदम् ॥११९॥
अर्थात् प्रकरणाल्लिङ्गादौचित्याद्देशकालतः।
मन्त्रेष्वर्थविवेकः स्यादितरेष्विति च स्थितिः ॥१२०॥
इति नानाविधोपायैर्नैरुक्तोयो यतेत सः।
जिज्ञासुर्ब्रह्मणो रूपमपि दुष्कृत् परं व्रजेत् ॥१२१॥
यथेदमग्रे नैवासीदसदप्यथ वापि सत्।
जज्ञे यथेदं सर्वं तद्भावहत्तं वदन्ति तु ॥१२२॥
भावप्रधानमाख्यातं षड्विकारा भवन्ति ते।
जन्मास्तित्वं परीणामो वृद्धिर्ह्रासं विनाशनम् ॥१२३॥
एतेषामेव षण्णान्तु येऽन्ये भावविकारजाः।
ते यथावाक्यमप्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२४॥
देवानाञ्च पितॄणाञ्च नमस्कारैस्तथैव च।
अथ व्यस्तं समस्तं वा शृणु व्याहृतिदैवतम् ॥१२५॥
व्याहृतीनां समस्तानां दैवतन्तु प्रजापतिः।

---

(क) ऋ० १, १५८, ३। (ख) ऋ० ५, २, ७। (ग) ऋ० १, १३, ३।
(घ) ऋ० ८, ७, ६।

व्यस्तानामयमग्निश्च वायुः सूर्य्यश्च देवताः ॥१२६॥
वाग्देवत्योऽथ वाय्वैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा) ॥१२७॥
भावप्रधानमाख्यातं षट्प्रकारा भवन्ति तु।
जन्मास्तित्वं परीणामो वृद्धिर्हानिर्विनाशनम् ॥१२८॥
एतेषामेव वर्णाः स्युरन्ये भावविकारजाः।
यथावचनमभ्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२९॥
त्रीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम्।
नामसूक्तप्रदेशेषु योज्यं प्रकरणं ननु ॥१३०॥
तेषां तु नामभिर्लिङ्गैर्योजनं सर्वनामभिः।
कुर्वन्नामानि वै वाङ्करन्यदेवत्यया यथा ॥१३१॥
यथेदमग्रे नैवासीदसदाप्यथवापि सन्।
अग्रे यथेदं सर्वन्तु भाववृत्तं प्रचक्षते ॥१३२॥
वाग्देवत्योऽथ वाय्वैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा ॥१३३॥
व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः।
व्यस्तानामयमग्निश्च वायुः सूर्य्यश्च देवताः ॥१३४॥

इति शौनकाचार्यकृतौ बृहद्देवतायामुपोद्घातप्रकरणम्।

---

आग्नेयं प्रथमं सूक्तं मधुच्छन्दस आदितः[१] ।
ऐन्द्रास्त्वन्योऽन्यदेवत्या[२] स्तृचाः सप्तात उत्तराः ॥१२५॥
वायव्यः प्रथमस्त्वेषामैन्द्रवायव उत्तरः ।
मैत्रावरुण आश्विन्य[३] ऐन्द्रो यः पञ्चमस्तृचः[४] ॥१२६॥
[५]नान्यः षष्ठादिम्बलिङ्गो गायत्रोऽन्यस्तु यस्तृचः[६] ।
बहुदैवतमन्यत्तु[७] वैश्वदेवेषु पठ्यते ॥१२७॥
लुग्रेदुवत्सौ[८]प्रार्थाति[क] गोतमेऽथ ऋजिश्वनि[ख] ।
अवत्सारे[ग] पदु[घ]च्छेपे[९] ऋचौ[१०] दीर्घतमस्तृ[ङ]चौ[११] ॥१२८॥

---

(१) आर्षकमिति ग० ङ० । घ० पुस्तकोद्धृतपाठश्च ।
(२) सर्वेऽन्यदेवत्या इति ग० ङ० । घ० उ० ।
(३) मैत्रावरुणोऽयश्विन इति ख० ग० ङ० । घ० उ० ।
(४) त्विन्द्रोवो वैश्वदेवत इति ख० । अप्यैन्द्रोऽतो वैश्वदेवश्च इति ग०ङ० ।
(५) तन्नामा विश्वलिङ्गो वेति ग० ङ० । घ० उ० ।
(६) गायत्रोऽस्त्वपरस्तृचः इति क० घ० च० ।
(७) बहुदेवतमन्नस्त्विति क० घ० । बहुदैवत्यमन्यस्त्विति ग० ।
(८) लुप्तेऽथ वात्से इति ग० ङ० । घ० उ० ।
(९) परुच्छेपे इति ग० । अवत्सारपरच्छेपे इति ख० ।
(१०) पुत्रे इति ख० ग० ङ० । घ० उ० ।
(११) तत् एषौ इति ख० ।

---

(क) ऋ० १, ५१, ७ । (ख) ऋ० ८, ४६, १० । (ग) ऋ० ५, ४४, १० ।
(घ) ऋ० १०, १००, ५ । (ङ) ऋ० १, १५८, ६ ।

वसिष्ठे नाभानेदिष्ठे[क] गये[ख] मेधातिथौ मनौ[ग] ।
कक्षीवति[(घ)१] विहव्ये[ङ] च बह्वन्येषु चर्षिषु[२] ॥१३९॥
अगस्त्ये इन्द्रदुक्थे[च] च विश्वामित्रे च[३] गाथिनि[छ] ।
दृश्यन्ते विप्रवादास्तु[४] तासु तासु स्तुतिष्विह ॥१४०॥
बह्वीनां सन्निपातस्तु यस्मिन्सूक्ते प्रदृश्यते ।
आचार्यौ यास्कशाकपूणी वैश्वदेवं तमाहतुः[५] ॥२४१॥
पादं वा यदि वार्धर्चमृचं वा सूक्तमेव वा ।
वैश्वदेवं वदेत्सर्वं यत्किञ्चिद्बहुदैवतं[६] ॥१४२॥
ऋषिभिर्देवताः सर्वा विश्वाभिः स्तुतिभिः स्तुताः ।
संज्ञा तु विश्वमित्यासां[७] सर्वावाप्तौ निपातिता[८] ॥१४३॥

---

(१) काक्षीवते इति ख० । कक्षीवते इति घ० ङ० ।
(२) चर्षिषु इति ख० ग० ङ० । घ० ङ० ।
(३) विश्वामित्रेऽथेति ख० ङ० । घ० ङ० ।
(४) विप्रपादाश्चेति क० घ० च० ।
(५) तदाहतुरिति ग० ङ० । घ० ङ० ।
(६) बहुदेवतमिति क० च० ।
(७) विश्वमित्येवेति ख० ग० ङ० । घ० ङ० ।
(८) निपातितौ इति ङ० । घ० ङ० ।

---

(क) ऋ० १०,६१,१८ । (ख) ऋ० ६, २, ८ । (ग) ऋ० १, ३६, १६ ।
(घ) ऋ० १, ५१, १३ । (ङ) ऋ० १, १०८, ६ । (च) ऋ०४,२०,१० ।
(छ) ऋ० १, ८, १ ।

सारस्वतः सप्तमस्तु[१] एताः प्रउगदेवताः[२] ।
अविद्यमान उने वा प्रउगेष्वत आवपेत्[३] ॥१४४॥
सरस्वती तु द्विविधा ऋक्षु सर्वास्वपि स्तुता[४] ।
नदीवच्चैव वाग्वच्च तयैवमुभयं स्मृतं[५] ॥१४५॥
[६]सुरूपकृत्नु[क]मित्यैन्द्रं सप्त चान्योऽन्यतः परं ।
षडादद्य[७] स्वधामिति मारुत्योऽनन्तरा ऋचः ॥१४६॥
एका वीळु[ख]चिदिन्द्रायं[८] मरुद्भिः सह गीयते ।

---

(१) सारस्वतस्तु सप्तम इति ग० ङ० । घ० उ० ।
(२) सारस्वतस्तु उत्तरमष्टमा प्रउगदेवता इति ख० ।
(३) अविद्यमान इत्यादिश्लोकार्द्धं ख० ग० ङ० चिह्नितपुस्तकेषु नोप-लभ्यते ।
(४) ऋक्षु सर्वासु सा स्तुतेति ग० ङ० । घ० उ० ।
(५) नदीवद्देवतावच्च सूत्राचार्य्यस्तु शौनकः इति ख० । अत्र स्तुताचार्य्यं इति ग० ङ० । घ० उ० ।
(६) इतः पूर्वं ख० ग० ङ० । घ० उ० चिह्नित पुस्तकेषु नदीवन्निगमाः षट् ते सप्तमो नेत्युवाच ह । अम्बेकाच दृषद्वत्यां चित्रइच्च सरस्वती । इयं शुष्मेभिरित्येतं मेने यास्कस्तु सप्तमम् । पद्योः सारस्वतस्यैतां याज्या मैत्रायणीयके । प्राधान्याद्धविषः पश्यन् वाच एवैतरो-ऽब्रवीत् । इत्यधिकं पठ्यते ।
(७) वषादद्य इति ख० षषादद्य इति घ० ।
(८) एकाविद्युचिमिन्द्रोयमिति क० । एकाविद्युचिदिन्द्रायेति ख० । एकापीळुचिदिन्द्रायेति ग० । एकावालुचिदिन्द्रायेति ङ० ।

---

(क) ऋ० ३, ४, १ । (ख) ऋ० १, ६, ५ ।

तथा एकाक्षरायास्तु अर्धर्चस्थो[१] द्विदेवतः ॥ १४७ ॥
मरुद्गणप्रधानोऽयं चेन्द्रस्तु[२] विचिकित्सितः ।
मन्दू[(क)][(३)] समानवर्चस्यौ[४] मन्दुनावासवर्चसा ॥ १४८ ॥
मन्दू इति[(ख)] प्रगृह्णन्ति[५] येषामेव[६] द्विदेवतः ।
एकदैवत्यमाम्राव्यो विज्ञेयाध्ययनात् पदं[७] ॥ १४९ ॥
रोदसी[(ग)] देवपत्नीनामथर्वाङ्गिरसे[(घ)] यथा[८] ।
[९]मरुद्गणप्रधानेयमाचार्याणां स्तुतिर्मता ॥ १५० ॥
मरुद्गणप्रधानत्वादिन्द्रस्तु विचिकित्स्यते[१०] ।

---

(१) अर्धर्चांऽन्त्योद्विदेवत इति घ० उ० । ङ० ।
(२) चौत्यं चेति ख० ग० । घ० उ० । मरुद्गणप्रधानो चौत्यं चेन्द्रः इति ङ० ।
(३) मन्दुः इति ख० ।
(४) समानवर्चस्यमिति ग० । समानवर्चसा इति घ० ।
(५) मद्धू इति प्रगृह्णन्तीति क० घ० ङ० च० ।
(६) एषमेवेति ख० । येषामेवेति ग० ङ० । घ० उ० ।
(७) विज्ञायात्ययनात्पदमिति ख० । विज्ञामाध्ययनात्पदमिति क० घ० ङ० ।
(८) रोदसी इत्यादि श्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(९) मरुद्गणेति ङ० ।
(१०) विचिकित्सितः इति ख० ग० । घ० उ० ।

---

(क) ऋ० १, ६, ७ । (ख) ऋ० १, ६, ७ । (ग) ऋ० १, १६७, ५ ।
(घ) ऋ० १०, ६२, १ ।

मरुद्रूपं महेन्द्रस्य[१] समांशं सकलं विदुः[२] ॥१५१॥
अग्निमित्यग्निदैवत्यं पादस्तस्य द्विदैवतः[३] ॥
निर्मथ्याहवनीयार्थावग्निनाग्निः[४] समिध्यते ॥१५२॥
द्वितीये द्वादशर्चे तु प्रत्यृचं देवताः स्तुताः।
स्तूयन्ते ह्यग्निना सार्द्धं तासां नामानि मे शृणु[५] ॥१५३॥
प्रथमायां स्तुतस्त्वेध्मो[क][६] द्वितीयायां तनूनपात्[ख]।
नराशंसं[ग] तृतीयायां चतुर्थ्यां स्तूयते त्विळः[घ] ॥१५४॥
बर्हि[ङ]रेव तु पञ्चम्यां द्वारो[च] देव्यस्ततोऽन्यथा[७]।
नक्तोषा सा तु सप्तम्यामष्टम्यां तु स्तुतौ[८] सह ॥१५५॥

---

(१) मरुद्रूपमहेन्द्रस्येति घ०। मरुद्रूपेणेन्द्रस्येति क० ख० घ० च०।
(२) समासं शाकलं विदुरिति क० घ० च०।
(३) पादस्तत्र-द्विदैवतः इति ग० ङ०। घ० ङ०।
(४) निर्मथ्याहवनीयार्थो अग्निनाग्निरिति क० घ०। निर्मथ्याहवनीयार्थे-ऽग्निनाग्निरिति च०।
(५) स्तूयते देवताऽथासां नामानि शृणुते च नः इति क० घ० च०।
(६) समिद्धश्चेति क० घ० च०।
(७) अन्यथेति ख०, अन्यमा इति च०।
(८) संस्तुतौ इति ग०, स स्तुतौ इति ङ० पुस्तकान्तरस्थ।

---

(क) ऋ० १०, ४५, २। (ख) ऋ० १, १३, २। (ग) ऋ० १, १३, ३।
(घ) ऋ० १, १२८, १। (ङ) ऋ० ३, ५३, १०। (च) ऋ० ५, ५, ५।

देव्या[क]विति[१] तु होतारौ नवम्यामृषि संस्तुताः।
तिस्रो देव्यो दशम्यां तु प्रेयस्त्वष्टे[ख]व तु स्तुतः॥१५६॥
एकादश्यां तु सूक्तस्य स्तुतिं[२] विद्याद्वनस्पतिम्[ग]।
द्वादश्यां तु स्तुता देव्यो विद्यात्स्वाहाकृती[घ]रिह[३]॥१५७॥
सूक्तेऽस्मिन् प्रत्यृचं यास्तु[४] देवताः परिकीर्त्तिताः।
ता एव सर्वास्वाप्रीषु द्वितीयायां[५] विकल्प्यते[६]॥१५८॥
प्रैषैः सहैव हैतानि लेकादश प्रपद्यते[७]।
यजुषः[८] प्रैषसूक्तं वा दशैतानीतराणि तु॥१५९॥
सौत्रामणानि[९] तु त्रीणि प्राजापत्याश्वमेधिके।

---

(१) देव्याविति ख० ङ०।
(२) स्तुतमिति ङ०।
(३) देवी विद्यात्स्वाहाकृतीरितीति ग०।
(४) प्रत्यृचे यास्त्विति क० घ० च०।
(५) द्वितीया त्विति ख०।
(६) विकल्प्यते इति ख० ग० च०।
(७) प्रैषैः सहाप्रीसूक्तानि तान्येकादश सन्ति चेति ख० ग० ङ०। सहाप्री इत्यत्र सहैयेति ख०।
(८) यजूंषीति ख० ग० ङ०।
(९) सौत्रामणीतीति क० घ० च०।

---

(क) ऋ० १, २७, १२। (ख) ऋ० १, ३२, २। (ग) ऋ० ६, ४८, १७।
(घ) ऋ० १, १८८, ११।

पुरुषस्य च यन्मेधे यजुःस्वेव तु तच्च ह[1] ॥१६०॥
अत्रैव प्रैषसूक्तं स्यात् यजुःस्याद्भियेत तत्[2] ।
तेषां प्रैषकृतं[3] यच्च यच्च[4] दीर्घतमा जगौ ॥१६१॥
मेधातिथं[5] यदुक्तं च चौक्षेवोभयवन्ति तु ।
ऋषिर्गृत्समदो[क][6] यच्च वाध्र्यश्व[ख]स्तु[7] यदुच्यते ॥१६२॥
नराशंसवदृषि[ग]स्तु[8] दृष्टप्रैष्य[9] यद्दौर्वशः ।
तनूनपाद्गवस्तु[10] जमदग्नि[घ]स्तु[11] यज्जगौ ॥१६३॥
विश्वामित्र[ङ] ऋषिर्यच्च जगौ वै काश्यपोऽसितः[च] ।
मेधातिथेस्तृचां[12] यास्तु प्रोक्ता द्वादश देवताः ॥१६४॥

---

(१) तानि षड़िति ख० ग० ङ० ।
(२) यजुःस्यादि येषु चेति क० घ० च० ।
(३) प्रैषगतं सूक्तमिति ग० ।
(४) यच्च तच्चेति ख०, यत्तु तच्चेति ङ० पुस्तकान्तरञ्च ।
(५) मेधातिथेरिति ख०, मेधातिथाविति ग० ङ० पुस्तकान्तरञ्च ।
(६) ऋषौ गृत्समदे इति ग० ङ० पुस्तकान्तरञ्च ।
(७) वाध्र्यश्वे चेति ग० ङ० पुस्तकान्तरञ्च ।
(८) ऋषेश्चेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) दृष्टं चेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) चेति ग० ङ० पुस्तकान्तरञ्च ।
(११) वामदेवश्चेति ग०, जामदग्न्यश्चेति ङ० पुस्तकान्तरञ्च ।
(१२) ऋचः इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० २, १९, ८ । (ख) ऋ० १०, ६९, ५ । (ग) ऋ० १, १३९;९ ।
(घ) ऋ० ३, ५३, १५ । (ङ) ऋ० ३, ५३, ९ । (च) ऋ० १, ७६, १० ।

सम्पश्यन्ते यथाग्नीका:[1] सम्पदं तां निबोधत ।
इध्मो[क]य: सोऽय[2]मेवाग्निरयं छौभे[ख][3] समिध्यते ।
भातेवैतत्कृतं[4] रूपं भातो[ग] छौभ:[5] समिध्यते[घ] ॥ १६५ ॥

इति बृहद्देवतायां द्वितीयोऽध्यायः ।

---

(१) यथाग्निं ताः इति ख॰ ग॰ ङ॰ पुस्तकान्तरच ।

(२) सर्व्वमिति ख॰ ग॰ ङ॰ पुस्तकान्तरच ।

(३) छौभ्रः इति ग॰ ङ॰ पुस्तकान्तरच ।

(४) भ्रातेर्वैतत्कृतमिति क॰ ग॰ घ॰ च॰ ।

(५) छौभ्रे इति ग॰ ङ॰ पुस्तकान्तरच ।

---

(क) ऋ॰ ८, ४६, २ । (ख) ऋ॰ ७, १, १६ । (ग) ऋ॰ ५, ६, ५ ।
(घ) ऋ॰ ४, १५; ४ ।

# अथ तृतीयोऽध्यायः ।



तनूनपाद्यस्त्वेव नाम्ना सोऽप्युच्यते तनूः(१) ।
नपा(क)दिति प्रजामाहुरमृतस्य(२) च सम्भवम् ॥ १ ॥
नराशंसन्विहैके तु(३) होत्रभिस्त्वाऽऽहुरध्वरे(४) ।
नराः शंसन्ति सर्व्वेऽस्मिन्नासीना इति वाग्मिनः(५) ॥ २ ॥
तदाऽऽहुरग्निमेवायं(६) नराशंसोऽध्वरे स्वयम्(७) ।
नरैः शस्यत आसीनैराऽऽस्य ऋत्विजो नराः(८) ॥ ३ ॥
इला त्विति कृतं रूपं सूरिभिर्गतिकर्मणः(९) ।

(१) यस्त्वसौ तनुमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) अमृतोऽस्येति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) नराशंसमिहैके त्विति ख० ग० ङ० पुस्तकान्तरञ्च ।
(४) अग्निमाहुरथेतरे इति ग० ङ० पुस्तकान्तरञ्च ।
(५) वाऽध्वरे इति ग० ङ० पुस्तकान्तरञ्च ।
(६) एतमेवाऽऽहुरन्येऽग्निमिति ग० ङ० पुस्तकान्तरञ्च ।
(७) स्वयमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(८) चैवर्त्विजो नरः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) इडस्त्विषिकृतं रूपमीडेश्च स्तुतिकर्म्मणः इति ग० ङ० पुस्तकान्तरञ्च । इड इत्यत्र इषः, इडेश्च इत्यत्र ईष्णोश्चेति ख०, स्तुतिकर्म्मणः इत्यत्र, गतिकर्म्मणेति च० ।

(क) ऋ० १, १४२, १ ।

इडावां[क]स्तेन चोक्ताग्निरिरिणा[ख](१)गतिकर्म्मणा(२) ॥ ४ ॥
वर्हि[ग]रेवायमग्निस्तु सर्वं हि परिवृंहितम् ।
अन्नेन यः स्तुतौ(३) वाबन्निभेन परिवृह्यते(४) ॥ ५ ॥
द्वार[घ]स्तु(५) देव्यो याः प्रोक्ता विश्वेषां तास्तु यत्नतः ।
अग्नायी[ङ]मनुवर्त्तन्ते तथाग्नाय्यग्निमेव च(६) ॥ ६ ॥
अग्नौ ध्रुवं स्थितास्तास्तु(७) स्तूयन्ते चाग्निना(८) सह ।
प्राधान्यात्तासु चैवाग्नेः स्तुतिष्वय(९)हविःषु च ॥ ७ ॥
नक्तोषा सा(१०) च ये देव्यावाग्नेय्यावेव ते स्तुते ।

---

(१) इड़िनेति ग०, ईड़िनेति ङ० पुस्तकान्तरञ्च ।
(२) वर्धिकर्म्मिणेति ग०, वर्धिकर्म्मणेति ङ०, बुद्धिकर्म्मणेति पुस्तकान्तरं ।
(३) यद्भुत इति ग० ङ० पुस्तकान्तरञ्च ।
(४) परिवृंहित इति ग० घ० ङ० ।
(५) द्वारस्येति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) आग्नायीमन्ववर्त्तन्त नाग्निं नाग्नाय्य एव चेति क० घ० च० ।
(७) ध्रुवास्थितत्वात्त्विति क० घ० च० ।
(८) संस्तूयन्तेऽग्निनेति ख० ग० ङ० ।
(९) स्तुतिष्वेवेति ग० ङ० पुस्तकान्तरञ्च ।
(१०) नक्तोषाऽसौ इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, २, ५ । (ख) ऋ० ८, ८७, १ । (ग) ऋ० ३, ५३, १७ ।
(घ) ऋ० १, १३, ६ । (ङ) ऋ० १, २२, १२ ।

श्यामाग्नेयी[१] हि कालस्य तस्यैवोषाः[क] कलैव तु[२] ॥ ८ ॥
तम उच्छत्यु[घ]षा नक्ता[ङ] नक्तोमां हिमविन्दुभिः ।
अपि वा[३] व्यक्तवर्णेति नञ् पूर्व्वां वे[च]रिदं[४] भवेत्[५] ॥ ९ ॥
नाम्ना भवत्युषा[६]स्वैव सैषा[७] प्रागुदयाद्रवेः ।
[८]सा हि वोषा[९] भवत्यादौ मध्ये प्राप्ते तमस्वती[१०] ॥१०॥
दैव्याविति[११] तु होताराबुभौ[१२] पार्थिवमध्यमौ ।

---

(१) भाव्याग्नेयीति ख०, श्यावाग्नेयीति ग०, श्याव्याग्नेयीति ङ० पुस्तकान्तरञ्च ।
(२) किला(ख)ऽवमे(ग)ति क० घ० च० ।
(३) अभि वेति ख० ।
(४) चेरिदमिति ख० ।
(५) तम उच्छत्युषेति श्लोकः क० घ० च० पुस्तकेषु न दृश्यते ।
(६) उषाः इत्यत्र उषेति पाठः संगतः ।
(७) प्रोषेति ख० ।
(८) ख० ग० ङ० पुस्तकेषु, सा हि वोषेति श्लोकार्द्धं, नाम्ना भवत्युषा-स्वैवेति श्लोकार्द्धात् प्राक्, पठितं ।
(९) दोषेति क० घ० च० ।
(१०) निशीथे सा तमस्विनीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(११) देव्याविताति ख० ग० ।
(१२) उभौ इति ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ४६, १ । (ख) ऋ० १ ३२,४ । (ग) ऋ० ३, ५४, ५ ।
(घ) ऋ० १, ४६, १ । (ङ) ऋ० १, ७३, ७ । (च) ऋ० १,७२, ९ ।

दिव्यादग्नेस्तु(१) अजाते देव्यौ तेनेह जन्मना(२)॥ ११ ॥
तिस्रस्तु देव्यो याः प्रोक्तास्त्रिस्थानैवेह सा तु वाक् ।
त्रिविधेनोच्यते नाम्ना ज्योतिःषु त्रिषु वर्त्तिनी ॥ १२ ॥
अग्निमेवानुगैषा(३) तु मध्ये त्वैन्द्री(४) सरस्वती ।
अमुं स्थिताधिलोकन्तु(५) भारती भारतो ह्यसौ ॥१३॥
सैषा तु त्रिविधा वै वाग्दिवि च व्योम्नि चेह च ।
व्यस्ता (६)चैव समस्ता च भजतेऽग्नीनिमानपि(७) ॥१४॥
त्वष्टा तु यः सोऽयमेव (८)पार्थिवोऽग्निरिति श्रुतिः(९) ।
पार्थिवस्यास्य वर्षः स्युः कस्याप्यृक्(१०)चार्त्तवेषु च(११) ॥१५॥
त्विषित(क)स्तुष्टुतो वा स्यात् (१२)तूर्णमश्नुवतीति वा(१३) ।

---

(१) द्यौरिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) कथ्यत इति क० ख० ङ० च० ।
(३) अनुग्नैवेति ख०, अनुसेवेति क० घ० च० ।
(४) प्राप्तेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(५) स्थितविष्णोकन्त्विति क० घ० च० ।
(६) व्याप्तेति क० घ० च० ।
(७) भजत्यग्नीनिमानन्विति क० घ० च० ।
(८) ह्यग्निमेवेति ख० ङ० पुस्तकान्तरञ्च, यत् स्वयं प्रोक्त इति ग० ।
(९) स्तुतिरिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) काव्यावीदिति ख०, कस्याप्यृगिति ङ० पुस्तकान्तरञ्च ।
(११) पार्थिवो वाग्राग्ने च कौत्सा त्रिष्वार्त्तवीषु चेति क० घ० च० ।
(१२) तुष्यिते वा स्यादिति ख०, त्वष्यतेर्वा स्यादिति ग० ङ० पुस्तकान्तरञ्च ।
(१३) अश्नुत एव वेति ख० ग०, वा इत्यत्र चेति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ८४, २ ।

कर्मसु त्वष्टारं वेत्ति [१]तेन नामैत[२]दश्नुते ॥१६॥
यः सहस्रतमौजस्तु [३]रवेश्चन्द्रमुपाश्रितः[४] ।
सोऽयं[५] त्वष्टारमेवाग्निः [६]परं वन्दे च यन्मधु[७][क] ॥१७॥
प्रादाद्दध्या च [८]सुप्रीतः पुत्राय[९] यदथर्वणे[१०] ।
स चाभवदृषिस्तेन ब्रह्मणा वीर्यवत्तमः[११] ॥१८॥
तम्वृषि[१२]र्निषिषेधेन्द्रो [१३]मैवं वोचः [१४]कश्चिन्मधु ।
न हि प्रोक्ते मधुन्यस्मिन् जीवन्तं त्वोत्सृजाम्यहं[१५] ॥१९॥

---

(१) कर्म्मसु त्वारस्यो वेतीति ग० ङ०, वेतीत्यत्र वेत्तीति ख० पुस्तकान्तरञ्च।
(२) नाम्नैतदिति ख० ।
(३) सहस्रतमो रश्मिरिति ग० ङ० ।
(४) चन्द्रमसोश्रित इति क० घ० च० ।
(५) सोऽपीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) अग्निमिति ग० ङ० पुस्तकान्तरञ्च ।
(७) वेदवतं मनुमिति ख०, चेद च यन्मध्विति ग०, वेद च यन्मध्विति ङ०, देव च यन्मध्विति पुस्तकान्तरं ।
(८) अपीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) सुतायेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) तदथर्वणा इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(११) दीप्तिमत्तरः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१२) तं त्वृषिरिति क० घ० च० ।
(१३) निषिषिधेन्द्र इति क० घ० च० ।
(१४) मेदं वाचः इति क० घ० च० ।
(१५) मधौ ब्रह्मन् जीवनं त्वहमुत्सृजे इति क० घ० च० ।

---

(क) ऋ० १, ११६, १० ।

तमृषिं त्वश्विनौ देवौ विविव[1]न्मध्वयाचतां[2] ।
स च ताभ्यां तदाचष्टे यदुवाच शचीपतिः ॥२०॥
तमब्रूतान्तु नासत्यावाश्वेन [3]शिरसाऽभवत् ।
मध्वाशु ग्राहय त्वं त[4]श्चेन्द्रस्त्वां हनिष्यति[5] ॥२१॥
आश्वेन [6]शिरसा तौतु [7]दध्यङ्ङाह यदश्विनौ[8] ।
तदास्येन्द्रोऽहरत्सन्तं [9]न्यधात्तामस्य तौ शिरः[10] ॥२२॥
दधीच[क]स्त[11]च्छिरस्त्वाश्वं हृतं वज्रेण वज्रिणा ।
पपात सरसो मध्ये पर्वते शर्यणावति[ख] ॥२३॥
तदङ्गस्तु[12] समुत्थाय भूतेभ्यो विविधान् वरान् ।

---

(१) विविक्ते इति ग० ङ० पुस्तकान्तरञ्च ।

(२) याचत्विति क० ख० ङ० च० ।

(३) वाप्यश्वेनेति ग० ङ० पुस्तकान्तरञ्च ।

(४) त्वावामिति क० ख० ध० च० ।

(५) मेन्द्रश्च त्वावधीत्ततः इति ख० ग० ङ० पुस्तकान्तरञ्च ।

(६) आप्यश्वेनेति ङ० पुस्तकान्तरञ्च ।

(७) ताभ्यामिति ख०, तत्त्विति क० घ० च० ।

(८) यदश्विनोरिति क० घ० च० ।

(९) तदस्येन्द्रो हरस्येहेति ख० ।

(१०) यावन्नधत्तामस्य यच्छिर इति ग०, नवतामस्य यच्छिरः इति ख०, चान्यनधत्तामस्य यच्छिरः ङ० पुस्तकान्तरञ्च ।

(११) दधीचश्चेति ग० ङ० पुस्तकान्तरञ्च ।

(१२) तच्छिरस्त्विति क० ख० घ० च० ।

---

(क) ऋ० १, ८४, १३ । (ख) ऋ० १, ८४, १४ ।

प्रादात्स[1] युगपर्यन्तं तास्वेवाप्सु न्यमज्जत[2] ॥२४॥
त्वष्टा रूपविकर्त्ता च योऽसौ माध्यमिके गणे।
स्तुतः स च निपातेन[3] सूक्तमस्य न विद्यते ॥२५॥
[क]वनस्पतिं तु यं प्राहुरयं सोऽग्निर्वनस्पतिः।
अयं वनानां हि पतिः पाता पालयतीति च[4] ॥२६॥
अग्निर्गृत्समदेना[ख]ऽयं वनस्पतिवदीडितः।
मन्द्रस्ये[ग]त्यस्य [5]सूक्तस्य [6]षड्टचस्य तृतीयया ॥२७॥
यूपवत्तरुवच्चैव स्तुतिर्याच [7]प्रसङ्गजा।
समस्तेनैव सूक्तेन [8]तृतीये सा तु मण्डले ॥२८॥
स्वाहाकृतीश्च[घ]सङ्ख्यास्तु [9]विदुषां मतयोऽभवन्।

(१) प्रादायेति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) निमज्जतीति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) निपाते चेति क० घ० च०।
(४) वेति क० घ० च०।
(५) मन्द्रस्येति चेति ग० ङ० पुस्तकान्तरञ्च।
(६) सूक्ते चेति ग०।
(७) यास्येति ग० ङ० पुस्तकान्तरञ्च।
(८) सर्व्वेषांप्रतिसूक्तेनेति ख० ग० ङ०, सर्व्वेषां यतिसूक्तेनेति पुस्तकान्तरं।
(९) क० घ० च० पुस्तकेषु, स्वाहाकृतास्तसंख्याश्चिति पाठोऽस्ति। स्वाहाकृतयोऽनेकाश्चेति ख० ग० ङ० पुस्तकान्तरञ्च।

(क) ऋ० ६, ४८, १७। (ख) ऋ० २, ३६, ८। (ग) ऋ० १, २६, ५।
(घ) ऋ० १, १८८, ११।

तत्त्वैवं सोऽय[१]मेवाग्निर्भवतीति विनिश्चयः ॥२९॥
अयं कर्त्ता च देवानां [२]चाहृतिस्तामिहैकजा।
अयं प्रसूतिर्भूतानां च तेषा[३]मयमव्ययः ॥३०॥
तनूनपा[क]द्द्वितीया तु [४]नराशंस[ख]वती च या।
समस्यते [५]प्रयोक्तव्ये चिष्वेवोभयवत्त्विह[६] ॥३१॥
नराशंसवती वा स्या[७]द्द्वितीयेह [८]प्रजार्थिनां।
बलकामोऽथ वा यः स्या[९]द्भूरिमिच्छति वापि [१०]यः[११] ॥३२॥
आग्नेयमिति[१२] यच्चेभि[१३]र्वैश्वदेवमिहोच्यते।

---

(१) त्वयमिति ग० ङ० पुस्तकान्तरञ्च।
(२) अयं हि कर्त्ता स्वाहानामिति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) सर्व्वेषामिति ख० ग० ङ० पुस्तकान्तरञ्च।
(४) चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) समस्येते इति ख० ग०, समश्यैते इति ङ० पुस्तकान्तरञ्च।
(६) उभयवस्त्वितिति ग०, उभयवत्सु त्विति ङ०, उभयवत्सु चेति पुस्तकान्तरं।
(७) चास्यादिति ग० ङ०।
(८) चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) अन्नकामो वेति ख० ग० ङ० पुस्तकान्तरञ्च।
(१०) भूतिमिच्छेद्यापीति ख० ग० ङ० पुस्तकान्तरञ्च।
(११) वेति ग०।
(१२) आग्नेयं सूक्तमिति ख० ग० पुस्तकान्तरञ्च, आग्नेये सूक्तमिति ङ०।
(१३) सूक्तमेभिर्यदिति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १८८, २। (ख) ऋ० १, १४२, ३।

तदिन्द्रलिङ्गं गायत्रं (क)वैश्वदेवेषु प्रदृश्यते ॥२३॥
इन्द्रसोममितीन्द्रं तु (१)यदा दृश्यकमार्त्तवम् ।
तस्मिन् सहर्तुना सप्त प्रत्यृचं स्तौति देवताः ॥२४॥
तवर्त्तुनेति षट्स्वृक्षु चतसृष्वृतुभिः सह ।
पुनर्द्वयोर्ऋतुनेति वहुत्वैकत्वलक्षिताः ॥२५॥
ऋतवो देवताभिश्च निपातेनेह संस्तुताः ।
अथर्त्तुप्रैषसूक्ते च तथा गार्त्समदेऽपि च[२] ॥२६॥
मुख्यया त्विन्द्रमेवास्तौ[३]न्मरुतस्तु द्वितीयया ।
तृतीयया तु त्वष्टारमग्निन्तु परया ततः[४] ॥२७॥
पञ्चम्या तु पुनः शक्रं षष्ठ्या देवास्तताष्टधौ ।
सप्तम्या द्याभिरग्निन्तु चतुर्भिर्द्रविणोदसं[ख] ॥२८॥
आदेशाद्दैवतं ज्ञेयमृङ्मन्त्राणां न[५] लिङ्गतः ।
न शक्यं लिङ्गतोऽप्यासां[६] ज्ञातुन्तत्त्वेन दैवतं[७] ॥२९॥

---

(१) इन्द्रसोमं पिबेतीममिति ख० ङ० पुस्तकान्तरञ्च, इममित्यत्र इदमिति ग० ।
(२) तवर्त्तुनेति षट्स्वृक्षु इत्यादि तथा गार्त्समदेऽपि चेत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(३) एवोर्चमग्निति क० घ०, एवार्चमग्निति च० ।
(४) चतुर्थ्या चाग्नि मेव चेति ख० ग० ।
(५) मन्त्राणान्त्विति क० घ० च० ।
(६) ह्यासामिति ख० ङ० पुस्तकान्तरञ्च ।
(७) देवताः इति क० घ० च० ।

---

(क) ऋ० १, २७ ४ । (ख) ऋ० ६, ८८, ३ ।

एकादश्या तु नासत्यौ[क] द्वादश्याग्निमिमं पुनः।
पृथक् पृथक् स्तुतीदन्तु सूक्तमाह रथीतरः[१] ॥४०॥
बहुदैवे द्विदैवे[२] वा गुणैर्वा[३] यत्र कर्मजैः।
स्तूयते देवतैकैका विभक्तस्तुति[४] तद्विदुः ॥४१॥
वैश्वदेवानि सूक्तानि त्रिविधानि भवन्ति तु।
सूर्यसंस्तवसंयुक्तं विश्वलिङ्गं पृथक्स्तुतिः[५] ॥४२॥
पृथक्स्तुति तु यत्प्रोक्तं तद्विद्या[६]द्बहुदैवतम्।
विश्वलिङ्गन्तु तद्यच विश्वैः स्वैः कर्मजैर्गुणैः[७] ॥४३॥
विश्वानुद्दिश्य यद्देवान् स्तौति[८] सूर्य्यमनेकधा।
देवानेवा[९]भिसंस्तौति तं प्राहुः सूर्य्यसंस्तवम् ॥४४॥
न तु भागोऽस्यसूक्तादौ[१०] न सूर्य्ये लौषधेषु वा[११]।

---

(१) रथान्तरः इति ख०।
(२) बहुदेवतद्वन्द्वे इति क० घ० च०, बहुदेवते द्वन्द्वे इति ख०।
(३) गुणैः स्वैरिति क० घ० च०।
(४) देवतैककामभक्तिस्तुतीति क० ख० घ० च०।
(५) पृथक् स्तुतीति निर्विसर्गान्तपाठः समीचीनः।
(६) यद्विद्यादिति क० घ० च०।
(७) कर्म्मभिः स्तुतः इति क० घ० च०।
(८) देवांस्तु यत्त्वेति क० घ० च०।
(९) देवैरेवेति क० घ० च०।
(१०) भागस्य सूक्तादाविति ख० ग० ङ० पुस्तकान्तरच, भागो वसूक्तादाविति च०।
(११) सूक्तेष्वेवौषधेषु वेति ग०, सूक्तेष्वेवौषधेषु वेति ङ०।

---

(क) ऋ० १०, २४, ५।

न सावित्रे ह्वयामी(क)ति न सूर्य्यायां(ख) कृतौ सुखे(१) ॥४५॥
न चैवैवं प्रपादेषु(२) मन्त्रेष्वन्येषु केषुचित् ।
न च यत्र सजोषेति पदं वा स्यात् सजू(ग)रिति ॥४६॥
यस्मिन्(३) प्रसङ्गादपि तु बह्वीनां परिकीर्त्तनम् ।
वैश्वदेवं तदप्याह स्थविरो लोमकायनः(४) ॥४७॥
असंस्तुतं संस्तुतवत्(५) प्रदिष्टं दैवतं क्वचित् ।
मन्त्रैस्तद्रूपयोऽर्व्वन्ति(६)तान्तु बुध्येत शास्त्रतः(७) ॥४८॥
आदौ तु मध्ये वान्ते च विधावृषु च कर्म्मभिः(८) ।
कर्म्माण्यनुपदिष्टानि प्रदिष्टान्यपि तु क्वचित्(९) ॥४९॥
कर्म्मैव तावत्सावित्र्यां निविद्धि स्तौति कर्म्मणा ।

---

(१) मखे इति ग० छ० ।
(२) प्रवादेष्विति ख० ग० छ० ।
(३) यस्मिन्निति क० घ० च० ।
(४) रोमकायनः इति ख० छ० ।
(५) स्तुतं वापीति ख० ग० छ० ।
(६) देवतान्वयोऽर्चन्तः इति क० घ० च० ।
(७) शास्त्रविदिति ख० ग० छ० पुस्तकान्तरञ्च ।
(८) पृथक्त्वेषु च कर्तृभिरिति ग० च०, पृथक्केषु च कर्तृभिरिति पुस्तकान्तरं ।
(९) कृत्तवदिति क० घ० च० ।

---

(क) ऋ० १, ३५, १ । (ख) ऋ० ५, ७३, ५ । (ग) ऋ० १, २२, ७ ।

यद्वेनुस्सध्यमनुष्टौ[१] वोढा दोग्ध्राप्सुरेव वा ॥५०॥
भागेयः स्तौति चाग्न्यादीन्मित्रादीनग्निसंस्तुतौ[२] ।
यद्दैभिरिति चैतस्मिन् वैश्वदेवेऽग्निमर्चति ॥५१॥
तदाऽङ्गिरादावन्ते च प्रायशोऽन्यां स्तुवन्नृषिः[३] ।
प्रातर्योगात्[क][४] प्रसङ्गाद्वा स्तौत्यन्यामपि देवताम् ॥५२॥
यस्यां वदत्यर्थवादान्[५] सा ज्ञेया सूक्तभागिनी ।
यान्तु स्तौति प्रसङ्गेन सा विज्ञेया निपातिनी ॥५३॥
चतुर्द्धा भण्यते[६] चास्मिन् सूक्ते वै[७] सूक्तभागिनी ।
यस्मिन् सर्वांस्तु राजर्षीनृषीन् वापि स्तुवन्नृषिः ॥५४॥
मेधातिथिरगस्त्यस्तु[८] बृहदुक्थो मनुर्गयः[ख] ।
ऋजिश्वा[ग] च सुकर्षश्च शार्यातो[घ] गोतमो लुशः[९] ॥५५॥

---

(१) यद्वेनुः सध्यमष्टाष्टाविति ङ० पुस्तकान्तरञ्च ।
(२) चाग्निसंस्तुताविति क० ख० घ० च० ।
(३) अन्याः स्तुवन्नृचः इति ग० ङ० पुस्तकान्तरञ्च ।
(४) प्रतियोगादिति ग० ङ० पुस्तकान्तरञ्च ।
(५) वदन्त्यर्थपादाः इति क० घ० च० ।
(६) न तु व्याहन्यते इति क० घ० च० ।
(७) वेति ग० ।
(८) चेति ख० ङ० ।
(९) मानवो यमः इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, ४१, २ । (ख) ऋ० ६, २, ८ । (ग) ऋ० ५, २९, ११ ।
(घ) ऋ० ३, ५१, ७ ।

सत्याग्नेयः पतङ्गश्च कक्षीवा[क]नाधिरौर्वशः[1] ।
नाभाक[ख]श्चैव निर्दिष्टो दुवस्यु[ग]र्ममतासुतः[2] ॥५६॥
विहव्यः[घ] काश्यप ऋषि[3]रवत्सारश्च नामयः[ङ] ।
वामदेवो मधुच्छन्दाः पार्थो दक्षसुता[4]दितिः ॥५७॥
शुक्रग्र्त्समद[च]ऋषिर्देवाः सप्तर्षयश्च[5] ये ।
तापसोऽग्निर्ऋषिः[6] कुत्सः[छ] कुसीदी चित[ज] एव च ॥५८॥
बन्धुप्रभृतयश्चैव चत्वारो भ्रातरः पृथक् ।
विष्णुश्च नेजमेषश्च नाम्ना संवनन[7][झ]श्च यः ॥५९॥
एते तु सर्व्वे[8] एवास्य विश्वैः स्वैः कर्म्मजैर्गुणैः ।
समस्तैरथ च[9] व्यस्तैः पृथक्सूक्तेषु तुष्टुवुः ॥६०॥

(१) उर्व्वसुरिति ङ० पुस्तकान्तरञ्च ।
(२) ममतासुताः इति घ० च० ।
(३) ऋषिरिति ख० ङ० पुस्तकान्तरञ्च ।
(४) पार्थोदक्षसुतेति क० घ० च० ।
(५) देवाश्च ऋषयश्चेति ङ० पुस्तकान्तरञ्च ।
(६) यमोऽग्निस्तापसः इति ग० ङ० पुस्तकान्तरञ्च ।
(७) सञ्चवन इति ग० ।
(८) सर्व्वा इति क० घ० च० ।
(९) वेति ङ० पुस्तकान्तरञ्च ।

(क) ऋ० १, १२६, २ । (ख) ऋ० ८, १४, २ । (ग) ऋ० १०, १००, १२ । (घ) ऋ० १, १०८, ६ । (ङ) ऋ० १, १३९, ९ । (च) ऋ० २, १९, ८ । (छ) ऋ० १, १०६, ६ । (ज) ऋ० १, ५२, ५ । (झ) ऋ० १०, ९१, १२ ।

पार्थिवो द्रविणोदा[क]ग्निः[१] पुरस्ताद्यस्तु कीर्त्तितः।
तमाहुरिन्द्रं दातृत्वा[२]देके तु बलवित्तयोः॥६१॥
अयं हि द्रविणोदाऽग्निरयं दाता बलस्य हि।
द्रविणोदाग्निरेवायं द्रविणोदा[ख]स्तदोच्यते॥६२॥
आग्नेयेष्ववदृश्येत[३] प्रवादाद्द्रविणोदसः।
[४]ऐन्द्रस्य नवकस्येह[५] यदैन्द्रावरुणं परम्॥६३॥

---

(१) द्रविणोदोऽग्निरिति क० घ० च०।
(२) अतिदातृत्वादिति ङ० पुस्तकान्तरञ्च।
(३) आग्नेयेष्वेव दृश्यन्ते इति ग०।
(४) ख० ङ० चिह्नितपुस्तकयोः, पुस्तकान्तरे च ऐन्द्रस्य नवकस्येहेति श्लोकार्द्धात्प्राक्, द्रविणोदाग्निरेवायमिति श्लोको न विद्यते। तत्र,—
जायते च बलेनायमध्येतृर्षिभिरध्वरे।
ऋत्विग्भिर्द्रविणां प्राहुर्हविषो यत्र जायते॥
दातारश्चर्त्विजस्तेषां द्रविणोदास्ततः स्वयम्।
ऋषीणां पुत्र इत्येषां दृश्यते बहुसोपधौ॥
मध्यमादा यतो जज्ञे तस्मादा द्रविणोदसः।
एतत्सार्द्धश्लोकद्वयं दृश्यते। ङ० चिह्नितपुस्तके द्रविणोदसः इत्यत्र द्राविणोदस इतिपाठः, पुस्तकान्तरे च अध्येतीत्यत्र अध्येत्विति पाठोऽस्ति।
(५) नवकस्याद्येति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १५, १०। (ख) ऋ० १, १५, ७।

तस्योत्तरं तु [१]सोमानं स्तूयते ब्रह्मणस्पतिः।
ऋग्भिः पञ्चभिराद्याभि[२]स्तिसृभिः सदसस्पतिः ॥६४॥
नराशंसो[क]ऽन्यया चर्चा सोमेन्द्रौ तु निपातितौ।
चतुर्थ्यां सोम इन्द्रश्च पञ्चम्यां दक्षिणा सह[३] ॥६५॥
प्रसङ्गाद्दक्षिणा प्रोक्ताः सम्बन्धाः स्वानलोकयोः।
प्राजापत्यं तथैन्द्रः स्यादिति तस्येह नामनी[४] ॥६६॥
कथिते द्वे च षट्चान्यान्येषाद्याद्याः[५] प्रजापतिः।
[६]श्लिष्टानि यानि नामानि तानि वक्ष्याम्यतः परं ॥६७॥
सप्तभिः कश्च कामश्च सदसस्पतिरेव च।
इलस्पति[७]र्वाचस्पतिस्तत[८]स्तु ब्रह्मणस्पतिः ॥६८॥
तृतीयान्ते तु सूक्तस्य चतुर्थं[९] पञ्चमश्च यत्।

---

(१) तस्योत्तरे चेति क० घ० च०।
(२) अन्याभिरिति ङ०।
(३) तथेति क० घ०।
(४) यानि तस्येह नामानि प्राजापत्यानि तानि त्विति ङ० पुस्तकान्तरञ्च।
(५) कथितानीह षड्ग्रानि तेषां त्वाद्य इति ङ० पुस्तकान्तरञ्च।
(६) श्लिष्टानीति श्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(७) इडस्पतिरिति क०।
(८) स्तुत इति ख० च०।
(९) प्रथममिति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १४२, ३।

चतुर्भिरितरैस्तच[१] न सूक्तं नाप्यृगुच्यते[२]॥६९॥
सर्वाण्येव तु सर्वासां देवतानां प्रजापतेः।
नामानि कथयन्त्येते सम्यग्भक्तिविदृषयः॥७०॥
तद्वाक्यैर्नैतदेवं स्यादृष्टानामेव[३] हि स्तुतः।
तैरेव चास्य कल्प्यन्ते[४] क्रतवश्च हवींषि च॥७१॥
मरुद्भिर्मध्यमस्थानेः पर[५] मग्निस्तु पार्थिवः।
नवकेनेह[६] सूक्तेन प्रतीत्य[७][क]मिति संस्तुतः॥७२॥
मरुतां साहचर्यात्तु[८] सूक्तेऽस्मिन्नाग्निमारुते।
मन्यते माध्यमञ्चैव[९] यास्कोऽग्निं न तु पार्थिवम्॥७३॥
स्यादयं पार्थिवस्त्वेव[१०] तथा रूपं हि दृश्यते।

---

(१) त्वेगमिति क॰ घ॰ च॰।
(२) नापि त्वृचोऽश्नुते इति क॰ घ॰ च॰, नानाप्यृचोऽश्नुते इति ग॰।
(३) एष इति ख॰ ग॰ ङ॰।
(४) तैरेवास्य प्रकल्प्यन्ते इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) चयमिति क॰ ग॰ घ॰ च॰।
(६) नवर्चेनेहेति ङ॰ पुस्तकान्तरञ्च।
(७) प्रत्यक्षमिति ङ॰।
(८) वेति ङ॰।
(९) मध्यमं त्वेवमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) पार्थिवेष्वेवेति ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ ७, ६८, ६।

भूयसे[क] वीतये[ख] चेति[१] वैद्युतेन तदश्वि हि[२] ॥७४॥
अथ स्याद[३]भिधानस्य देवतायाः पृथक् पृथक्[४] ।
ऋचोऽर्धर्चस्य पादस्य कथञ्ज्ञायेत[५] दैवतम् ॥७५॥
यथा निविदि सावित्र्यां स्तूयते कर्म कर्मणा[६] ।
दोग्ध्री धेनु[ग]र्वोढानड्वानाशुः सप्तिपुरं धियाः[७] ॥७६॥
यथा वरुणमित्रीया[८] वरुणः प्राविता भुवत्[घ] ।
सूक्तप्रायेणैभिरग्ने[९] परीक्ष्यं[१०] तत्र देवताः[११] ॥७७॥
मन्त्राणां द्वैपदादीनां द्विदेवकदेवतम् ।
असंस्तुतं संस्तुतवत्प्रदिष्टं दैवतं क्वचित् ॥७८॥

---

(१) ऊयसे वीतये चैतदिति क० घ० च०।
(२) वैद्युतेनेत्यतश्विहेति ख० छ०।
(३) यतश्चिदिति छ० पुस्तकान्तरञ्च।
(४) स्तुतौ स्तुताविति ख० छ० पुस्तकान्तरञ्च।
(५) ज्ञायेतेति ख० छ० पुस्तकान्तरञ्च।
(६) सूर्य्यकर्म्मयेति छ० पुस्तकान्तरञ्च।
(७) तथैव चेति क० घ० च०।
(८) यथा च घर्म्मो मित्रीयाः इति क० घ० च०।
(९) अग्नेरिति ख० छ० पुस्तकान्तरञ्च।
(१०) परोक्ष्यः इति ग०।
(११) परोक्षस्तत्र संस्तवः इति छ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १९, १। (ख) ऋ० १, ५, ६।
(ग) ऋ० २, ३१, ७। (घ) ऋ० १, ३६, ८।

यत्र द्विदेवते मन्त्र एकवद्देवतोच्यते ।
विभक्तस्तुति तद्विद्यात् बह्वल्पबह्ववच्च तत्[१] ॥७९॥
आशीर्वादेषु संज्ञास्तु कर्मसंस्थास्तु देवताः ।
बह्वो हि बह्ववद्यत्र[२] द्विवद्वौ यत्र संस्तुतौ[३] ॥८०॥
सुधन्वन[क] आङ्गिरसस्या[ख]सन् पुत्रास्त्रयः पुरा[४] ।
ऋभु[ग]र्विभ्वा[घ][५]च वाज[ङ]श्च[६]शिष्यास्ते त्वष्टुरेव च[७] ॥८१॥
शिक्षयामास तांस्त्वष्टा त्वाष्ट्रं यत्कर्म किञ्चन ।
परिनिष्ठितकर्माणो विश्वेदेवा उपाह्वयन् ॥८२॥
धेनुं सर्वदुघां चक्रुरमृतं सवदच्यते ।
बृहस्पतयेऽश्विभ्यां रथं दिव्यं त्रिबन्धुरम् ॥८३॥
इन्द्राय च हरी देवप्रहितेनाग्निनापि यत् ।

---

(१) बह्वल्पबह्ववच्च यदिति ख० पुस्तकान्तरञ्च ।
(२) बह्वो हि बह्ववाच्यत्र इति ख० ङ० पुस्तकान्तरञ्च ।
(३) द्विपदे यत्र संस्तुते इति क० ग० घ० च० ।
(४) आसन् सुधन्वनः पुत्रास्त्रय आङ्गिरसस्य ये इति ख० ङ० पुस्तकान्तरञ्च ।
(५) विश्वेति ग० घ० ।
(६) वायुश्चेति ख० ।
(७) त्वष्टुश्च तेऽभवन्निति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ५, ४२, ११ । (ख) ऋ० ४, ४०, १ । (ग) ऋ० १, ११०, ७ ।
(घ) ऋ० १, ११३, १ । (ङ) ऋ० १, २७, ८ ।

एकश्च समभित्युक्ते ज्येष्ठो[१] द्वावित्यथाह च ॥८४॥
उक्त्वा ततश्चमसान्यथोक्तं तच दर्षिताः।
त्वष्टा च सविता[२]येव[३] देवदेवप्रजापतिः ॥८५॥
सर्व्वान् देवान् समामन्त्र्य चाम्रुतत्वं ददुश्च ते।
तेषामाद्यन्त्ययो[४] गाथा दृश्यते बहु वसवः[५] ॥८६॥
विश्वेषां ते ततश्चक्रु[६]र्वाहनान्यायुधानि च।
तृतीयसवने तेषां तेषु भागः प्रकल्पितः ॥८७॥
अपिब[क]त्सोममिन्द्रश्च तेसत्र सवने[७] [ख]सह।
तेषां स्तुतिरिन्द्रसूक्तमय[८]मित्यार्भवं[९] परम् ॥८८॥

---

(१) त्वष्टेति पुस्तकान्तरं।
(२) सविनेति ङ०।
(३) येवेत्यत्र चैवेतिपाठः समीचीनः।
(४) आद्यन्तयोरिति सविसर्गान्तपाठो युक्तः।
(५) श्रेगुं सवर्दुघामित्यदि दृश्यते बहुवत्सवः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते। दृश्यते बहवत्सव इत्यत्र, दृश्यन्ते बहव-त्सवा इति पाठः साधुः।
(६) ततस्ततश्चक्रुस्ते ततदिति ङ० पुस्तकान्तरञ्च।
(७) सवनैरिति ग०।
(८) त्वयमिति क० ग० घ० च०।
(९) इत्यष्टकमिति ग०ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ३२, ३। (ख) ऋ० १, १६, ५।

इहेन्द्राग्नी स्तुतौ देवौ तृतीयस्यादिरश्विनौ[१] ।
हिरण्यपाणिं[२] सावित्री तिस्रश्चाप्यत[३] उत्तराः[४] ॥८९॥
एकाग्नेर्दे तु देवानां[५] द्वादश्यो देवपत्नयः ।
इन्द्राणी वरुणानी च आग्नेयी[६] च[७] पृथक् स्तुताः ॥९०॥
द्यावापृथिव्यौ द्वे च स्यात् स्योना[क] दिस्त्वेव पार्थिवी[ख][८] ।
देवानां वात इत्येषा[९] सूक्तशेषस्तु वैष्णवः ॥९१॥
वायोस्तोथेन्द्रवायुभ्यां तृचो द्वाभ्यां[१०] ततः परम् ।
तृचे[११] मित्रावरुणयोस्तथेन्द्राय मरुत्वते ॥९२॥

---

(१) आदितोऽश्विनाविति ङ॰ पुस्तकान्तरञ्च।
(२) हिरण्यपाणिरिति पाठो युक्तः।
(३) ऽप्यन्य इति ख॰, सावित्र्यस्ततोऽप्यत इति ङ॰ पुस्तकान्तरञ्च।
(४) चतस्रश्चाप्यथोत्तराः इति ग॰।
(५) च देवीनामिति ङ॰ पुस्तकान्तरञ्च।
(६) अमायीति ख॰ ङ॰ पुस्तकान्तरञ्च।
(७) ता इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) मह्योद्वे स्योनेत्यृक् पार्थिवी स्तुतेति ङ॰।
(९) वातो देवा इति देवीति क॰ घ॰ च॰।
(१०) तृचो द्वाभ्यामिति क॰ ग॰ घ॰ ङ॰ पुस्तकान्तरञ्च, तृचस्ताभ्यामिति ख॰ ङ॰।
(११) तृचः इति ग॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १,२२,१५। (ख) ऋ॰ ८,२५,६।

उषो[१] विश्वेषां देवानां पूष्ण आह्वये[क] ह्यचः[२]।
असक्तो हि हविस्तस्य दन्तः पूर्वं हृतो[ख]रथे[३] ॥९३॥
आहविस्तथुतः पूषा स गोभिरिष्यते यतः[४]।
यथा हि मधुनः पूर्णो दृतिर सौति चाश्विनौ[५] ॥९४॥
आवर्त्तनिं मधुनेति दृतेरिव च दृश्यते[६]।
अर्धांशमा अपां ज्ञेया अर्धर्चान्त्याग्निदेवता[७] ॥९५॥
कस्य नूनमु कात्याया आग्नेय्यृक् सवितुस्तथः।
भगभक्तस्य[ग] भागो वा परं यदिति[८] वारुणम्[९] ॥९६॥
वसिष्ठाशीति चाग्नेये उगग्नेर्मध्यमस्य तु।

---

(१) ह्यच इति ग॰ घ॰ ङ॰ च॰।
(२) चाह्वयेवि चेति ख॰, चाह्वयिरित्यचः इति ग॰, तन्नाह्वयंवि चेति ङ॰।
(३) दतः रथे इति ङ॰ पुस्तकान्तरञ्च।
(४) गोरिभोरिष्यते ततः इति ख॰।
(५) दितिमर्षोति चाश्विनाविति ख॰, वाश्विनौ इति ङ॰।
(६) असक्तो हि हविस्तस्येत्यादि इतिरेव च दृश्यते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(७) अध्यर्द्धान्त्याग्निदेवतेति ख॰ ङ॰, अप्यर्द्धान्त्याग्निदेवतेति ग॰।
(८) हि यचेति ग॰।
(९) यचिद्धि वारुणे इति ङ॰।

---

(क) ऋ॰ १, २३, १४। (ख) ऋ॰ ४, ४५, १। (ग) ऋ॰ १, २४, ५।

जराबोधे[क]ति विज्ञेया वैश्वदेव्युत्तमोत्तमा[१] ॥९७॥
पराश्वतस्रो यास्त्वैन्द्रे चेन्द्रोलूखलयोः स्तुतिः[२] ।
मन्येते[३] यास्ककात्थक्या[४]विन्द्रस्येति तु भागुरिः ॥९८॥
यच्चिद्ध्युलूखलस्य द्वे द्वे परे मुसलस्य तु ।
चर्माधिषवणीयं[५] वा सोमं वान्त्या प्रशंसति ॥९९॥
ऐन्द्रं यच्चिद्धि सत्येत्युत्तरस्त्वाश्विनात्तृचात्[६] ।
आश्विनादुत्तरस्त्वन्य उषस्य[७] स्तृच उत्तमः ॥१००॥
स्तूयमानः शश्वदिति प्रीतस्तु मनसा ददौ ।
शुनःशेपाय[ख] दिव्यन्तु रथं सर्वं हिरण्मयम् ॥१०१॥
आग्नेयं सूक्त[८]मैन्द्रे च[९] चिच्चिदित्याश्विनं ततः ।
अतेऽर्थवादं कर्मैतदिन्द्रस्येति तु शंसति ॥१०२॥
पादोऽग्नये कथामीति मैत्रावरुण उत्तरः ।

(१) वैश्वदव्युत्तमानमः इति क० ग० घ० च० ।

(२) यत्रेति मुसलोलूखलस्तुतिरिति ङ० पुस्तकान्तरञ्च ।

(३) मन्येतामिति ख० ङ० पुस्तकान्तरञ्च ।

(४) यास्कात्थक्याविति ङ० पुस्तकान्तरञ्च ।

(५) चर्म्माधिषवणीये इति ङ० ।

(६) आश्विनं तृचमिति ङ० ।

(७) आश्विनेत्युत्तरं कस्त्र चौषस्य इति ङ० पुस्तकान्तरञ्च । कस्त इत्यन्न कश्चिदिति ख० ।

(८) सूक्तमिति ख० ग० ङ० पुस्तकान्तरञ्च ।

(९) द्वे इति ङ० ।

(क) ऋ० १, २७, १० । (ख) ऋ० १, २४, १२ ।

तृतीयो रात्रिसंस्तावः[१] सूक्तं सावित्रमुच्यते ॥१०३॥
पञ्चेमानि जगौ दृष्ट्वा[२] सूक्तान्याङ्गिरसो मुनिः।
हिरण्यस्तूपतां प्राप्य[३] सख्यं चेन्द्रेण साम्प्रतम् ॥१०४॥
आग्नेयं प्रेति मारुतं क्रीळं[४] (क)चोपि पराश्रतः।
सूक्तमुद्[५]ब्राह्मणस्तथ्यं यं रचन्ति चयस्तृचाः ॥१०५॥
वरुणार्य्यममित्राणां मध्य आदित्यदैवतः।
पौष्णं सपूषन्[६] षड्रौद्र्य[७]स्तृतीया न तु केवला ॥१०६॥
मित्रेण वरुणेनाच[८] विश्वैर्देवैश्च संस्तवः।
उक्तमत्वर्षिणा पूर्व्वमाद्यन्नाद्दैवतं विना ॥१०७॥
ज्ञातुं न शक्यते लिङ्गात्तथापि क्वचिदुच्यते।
आदित्या वसवो रुद्रास्त्वमग्न इति च स्तुताः ॥१०८॥
इषः सौम्योऽग्न[९] अग्नेये प्रगाथेनाश्विनौ स्तुतौ।

---

(१) रात्रिः स्तुता तृतीयेनेति ड०।
(२) दृष्ट्वेति ख० ग० ड० पुस्तकान्तरञ्च।
(३) प्राप्तः इति ड०।
(४) क्रीळमिति पुस्तकान्तरं।
(५) उत्तिष्ठेति ख० ड० पुस्तकान्तरञ्च।
(६) सम्पुषन्निति पाठो विशुद्धः।
(७) पौष्णं संदशरौद्रकेति ड० पुस्तकान्तरञ्च।
(८) वरुणेनास्येति ख० ड० पुस्तकान्तरञ्च।
(९) सौम्यम इति पुस्तकान्तरं।

---

(क) ऋ० १, ३७, १।

सहोपसा लिङ्गभाजा वयं सोमः सुदानवः[१] ॥१०९॥
अर्धर्चो देवदेवत्य एष इत्याश्विने परे ।
आदित्यं मन्यते यास्को हविषेति[२] सहस्तुतं[३] ॥११०॥
सहोपसे ततः सौर्यमुदुत्यमिति संस्तुतम् ।
अग्निर्येन वरुणेषु रोगघ्नश्च उत्तमः ॥१११॥
रोगोपनुद[४]माद्याभ्यामुद्यन्नित्युत्तमे तृचे ।
अर्धर्चं तु द्विषद्द्वेष ऐन्द्रः सव्यः[५] [क]प्रतर्षिषु ॥११२॥
स्वयमिन्द्रसमं पुत्रमिच्छन्नोऽङ्गिरसो मुनेः ।
वश्येव[६] सव्यो भूत्वर्षि[७] र्यांगिरसात्पुत्रतामितः ॥११३॥
प्रथमे मण्डले ज्ञेया ऋषयस्तु प्रतर्षिनः ।
क्षुद्रसूक्तमहासूक्ता अन्ये मध्येषु मध्यमाः[८] ॥११४॥

---

(१) उक्तमन्त्रर्षियोत्यादि वयं सोमः सुदानवः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

(२) हविषेति पुस्तकान्तरं ।

(३) आदित्यमित्यादि श्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) रोगापमुद्गीति ग०, रोगापनुतिविति ङ० ।

(५) अन्नर्चन्तु द्विषद्द्वेषदैन्द्राणस्तेति ङ० ।

(६) वश्ये चेति ख० ।

(७) भूत्वर्षेरिति क० ग० घ० च० ।

(८) प्रथमे मण्डले ज्ञेयेत्यादि अन्ये मध्येषु मध्यमा इत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते ।

---

(क) ऋ० १, ८२, ५ ।

नवकं जातवेदस्यं नूषिद्यत्तु वया इति ।
वैश्वानरीयं तत्सूक्तमाग्नेयन्तु ततः परम्[१] ॥११५॥
ऐन्द्राण्यस्मै तत[२]स्त्रीणि वृष्णे शर्धाय[क] मारुतम् ।
आग्नेयानि तु पश्वे[ख]ति नवशश्वद्धि वामिति[३] ॥११६॥
[४]दशाश्विनानीमानीति इन्द्रावरुणयोः स्तुतिः ।
सौपर्ण्यास्तु काश्चिच्च[५] निपात[६]स्तुतिषु स्तुताः ॥११७॥
उपप्रयन्तः[ग] सूक्तानि आग्नेयान्युत्तराणि षट् ।
हिरण्यकेशो[घ] रजसस्तृचोऽग्नेर्मध्यमस्य तु ॥११८॥
इत्थेति[७] पञ्च त्वैन्द्राणि[८] यामित्यस्यां निपातिताः ।

(१) वह्निमाग्नेयमुत्तरमिति ख० ङ० पुस्तकान्तरञ्च ।
(२) इन्द्रः इति ङ० ।
(३) नवषड्द्वैपदानि त्विति ङ० पुस्तकान्तरञ्च ।
(४) ङ० चिह्नितपुस्तके पुस्तकान्तरे च, दशाश्विनानीति श्लोकार्द्धस्थाने, उपान्त्यं सप्तमेऽर्द्धर्चं न मैत्रावरुण्यं विदुरिति पाठोऽस्ति ।
(५) याः काश्चिदिति ग० ङ० पुस्तकान्तरञ्च ।
(६) निपाताः इति ङ० पुस्तकान्तरञ्च ।
(७) इच्छेतीति ख० ङ० पुस्तकान्तरञ्च ।
(८) चैन्द्राणीति ङ० पुस्तकान्तरञ्च ।

(क) ऋ० १, ३७, ४ । (ख) ऋ० १, ६५, १ । (ग) ऋ० १, ७४, १ ।
(घ) ऋ० १, ७९, १ ।

दध्य(क)ङ्मनुरथर्वा च मारुतानि प्रये ततः ॥११९॥
चत्वार्य्याणो(ख) वैश्वदेवे द्वे देवानां स्तुतिर्मता(१)।
आनोभद्रास्य देवानां भद्रं यावच्छतं पुनः ॥१२०॥
मधुवातास्तृचे तस्मिन् परमं मध्वपीष्यते।
ग्नाश्चर्या ग्रन्न इत्येषां वैश्वदेवी ऋगिष्यते(२) ॥१२१॥
(३)अदितिर्द्यौरिति त्वस्यां विभूतिः कथिता(४)दितेः।
त्वं सोमसौम्यमौषस्य(५) मेता उत्यास्तृचोऽश्विनोः ॥१२२॥
अग्निनाग्नेस्य(६) सोमस्य अग्नीसोमाविति स्तुतिः(७)।

---

(१) चत्वार्य्याण इति सूक्ते देवानां स्तुतिरुत्तरेति क० ख० घ० च०, चत्वार्य्याणो इत्यत्र चत्वार्य्यामाविति ख०।

(२) आनो भद्रास्य देवानामित्यादि वैश्वदेवी ऋगिष्यते इत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।

(३) पुस्तकान्तरे, अदितिर्द्यौरिति श्लोकार्द्धं, आनो भद्रास्येति श्लोकार्द्धात् परं पठितं।

(४) कथ्यते इति ख० ङ० पुस्तकान्तरञ्च।

(५) मेघस्यमिति ख०, मेधस्यमिति क० घ० च०।

(६) अश्विनाग्नेः ससेति क० घ० च०।

(७) विमं स्तुमे इति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ८०, १६। (ख) ऋ० १०, ५५, ५।

गोतमादौशिजः[क] कुत्सपरुच्छेपावृषेः[१] परः ॥१२३॥
इमं कुत्स[ख] आङ्गिरसो ददर्शजातवेदसं जगाद षोड़शर्च।
पूर्वी देवा इत्यृषो देवदेवास्त्रयः पादा उत्तमायास्ततोऽर्द्धम् ॥१२४॥
तस्यैव वा यस्य तत्पूर्वमुक्तं मित्रादिभ्यो वाच[२] षड्भ्यः प्रक्रताभ्यः।
अन्त्योऽर्धर्चः षसां स्तुतानां पूर्वा देवाः पादैः स्तुतिभिः स्तुताः[३] ॥१२५॥
भरद्वाजे गृत्समदे वसिष्ठे नोधस्य[ग] गस्त्ये विमदे नभाके[घ]।
कुत्सेनोदर्के[४] बहुदेवतेषु तथा द्विदेवेषु समानदेवधर्म्माः[५] ॥१२६॥

(१) गोतमो नाम य ऋषिः कुत्स आङ्गिरस इति क० घ० च०।
(२) वाचेत्यत्र स्तुताभ्यां इति क० घ०, स्तुताभ्यो इति च०।
(३) ङ० चिह्नितपुस्तके पुस्तकान्तरे च,—
इमं कुत्स आङ्गिरसो ददर्श जातवेदसम्।
कुत्साद्दीर्घतमास्त्वेतमध्ये तारस्त्वधीयते॥
पूर्व्वा देवास्ततो देवास्त्रिभिः पादैस्तु संस्तुताः।
षोडशर्चं तथा सूक्तं जगाद चतुरित्यसौ।
अन्त्येऽर्द्धर्चे तु वा षसां लिङ्गोक्तानां स्तुतौ गयाः॥
इति पाठो वर्त्तते।
क० घ० च० चिह्नितपुस्तकेषु, कुत्साद्दीर्घतमास्वेतीति श्लोकार्द्धस्थाने कुत्साद्दीर्घतमा इति ते द्वे एवमधीयते। इति पाठोऽस्ति। इतीत्यत्र ग्रन्थदिति ग०।
(४) कुत्सेनोदर्केति क० घ० च०।
(५) समानधर्म्मिणः इति ख० ग० ङ० पुस्तकान्तरञ्च।

(क) ऋ० १, १८, १। (ख) ऋ० १, १०६, ६। (ग) ऋ० १, ६१, १४। (घ) ऋ० ८, ४०, ४।

द्वे विरूपे सूक्तमौषसाग्नये[१] समन्नये[क]ति द्रविणोदसेऽग्नये।
वैश्वानरस्येति[२] वैश्वानरीयमुक्तमस्मात्पूर्व्वं शुचयेऽग्नये पुनः ॥१२७॥
जातवेदस्यं सूक्तसहस्रमेक ऐन्द्रात्पूर्व्वं कश्यपार्षं वदन्ति।
जातवेदसे सूक्तमाद्यन्तु तेषामेकभूयस्त्वं मन्यते शाकपूणिः।१२८॥
दृचाद्या[३] सहस्रर्चान्तं सूक्तं नानाविधं भवेत्।
नवनवतिः पञ्चलचा ऋचः स्युः सचतुःशतम् ॥१२९॥
नानादैवतमेकार्षं छन्दोभिश्चिचमुत्पथम्[४]।
[५]सयोवृषेन्द्राणि पञ्च वैश्वदेवानि चन्द्रमाः १३०॥
चौष्ण्येन्द्राग्नेय इन्द्राग्नी ततमित्यार्भवे परे।
चितं[ख] गास्त्वनुगच्छन्तं क्रूराः शाला[६] वृकौ[ग] सुताः ॥१३१॥

(१) औषस्यमग्नेर्वेति ङ० पुस्तकान्तरं।
(२) वैश्वानरस्येति ये इति ग०।
(३) दृचाद्यमिति पाठः शुद्धः।
(४) वैश्वानरस्येति वैश्वानरीयमित्यादि छन्दोभिश्चिचमुत्पथमित्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न विद्यते। जातवेदस्यं सूक्तसहस्रमित्यादि छन्दोभिश्चिचमुत्पथमित्यन्तपाठः ग० चिह्नितपुस्तके न दृश्यते। दृचाद्या सहस्रर्चान्तमित्यादि छन्दोभिश्चिचमुत्पथमित्यन्तपाठः ख० चिह्नितपुस्तके नेष्यते।
(५) क० घ० च० चिह्नितपुस्तकेषु सयोवृषेन्द्राणीति श्लोकार्द्धात् प्राक्, अयनः शुचयेऽग्नये वैश्वानरीयं जातवेदस इति जातवेदस्यम्। इत्यधिकं पठितम्।
(६) शालेति ग० ङ०।

(क) ऋ० १, ६६, १। (ख) ऋ० २, ३४, १०। (ग) ऋ० १, ११७, १८।

कूपे प्रक्षिप्य गाः[१] सर्वास्तत एवापजह्निरे[२]।
स तत्र सुषुवे सोमं मन्त्रवि[३]न्मन्त्रवित्तमः ॥१२२॥
देवांश्चावाहयन् सर्वांस्तच्छुश्राव बृहस्पतिः।
आगच्छतोऽथ तान् दृष्ट्वा क वसत्यस्य तत्स्थलम् ॥१२३॥
सर्व्वं दृष्ट्वा त्र्यरुणस्यार्य्यमण इत्युपालभत्।
कूपेष्टकाभिर्म्मणितान्यङ्गान्येवाभवन्मम ॥१२४॥
दृष्ट्वा सर्व्वानहं स्तौमि यद्यप्येको न पश्यति[४]।
बृहस्पतिप्रचोदिता विश्वेदेवगणास्तयः ॥१२५॥
जग्मुस्ते[५] तस्य तं यज्ञं भागांश्च जगृहुः सह।
बृहस्पति[६]स्त्रितस्यैतत्[७] ज्ञानं विज्ञानमेव च ॥१२६॥
तृचेनाद्येन सूक्तेन जगादर्षिरसाविति।
द्यावापृथिव्यावीळेति आग्नेयः[८] पाद उत्तरः ॥१२७॥
आश्विनः सूक्तशेषः स्यादिदं रात्र्युषसोः स्तुतिः।

---

(१) ताः इति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) एवाप्य जह्निरे इति ङ० पुस्तकान्तरञ्च।
(३) तत्र सोमं सुषावासौ मन्त्रवदिति ङ० पुस्तकान्तरञ्च।
(४) आगच्छतोऽथेत्यादि यद्यप्येको न पश्यतीत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तके नोपलभ्यते।
(५) आजग्मुरिति ख० ङ० पुस्तकान्तरञ्च।
(६) बृहस्पतेरिति ख० ङ० पुस्तकान्तरञ्च।
(७) त्रितस्यैतमिति क० घ० च०।
(८) द्यावापृथिव्योरीळे चेत्याग्नेयः इति ङ० पुस्तकान्तरञ्च।

इमा रौद्रं ततः[१] सौम्यं चित्रं पश्चाश्विनान्यतः ॥१३८॥
नासत्याभ्यामिति त्वन्ये अर्धर्गं दुःस्वप्ननाशिनी[२]।
ऐन्द्रञ्च[३] वैश्वदेवञ्च प्रोषसे पृथुहस्तरे ॥१३९॥
ऋषिर्दानञ्च[४] भाव्यस्य[क] प्रातरित्यच शंसति।
कक्षीवता[ख] विदित्वेति[५] यदैन्द्रमुपदिश्यते ॥१४०॥
परोक्षं वैश्वदेवं[६] तत् प्रदिष्टं स्वरसामसु।
अधिगम्य गुरोर्विद्यां गच्छन् स्वनिलयं प्रति ॥१४१॥
कक्षीवानध्वनि श्रान्तः सुष्वापारण्यगोचरः।
तं राजा स्वनयो नाम भावयव्यसुतो[७] व्रजन् ॥१४२॥
क्रीड़ार्थं सानुगोऽपश्यत् सभार्यः सपुरोहितः।
अथैनं रूपसम्पन्नं दृष्ट्वा देवसुतोपमम् ॥१४३॥
कन्यादाने मतिं चक्रे वर्णगोत्राविरोधतः।
सम्बोध्यैनं स पप्रच्छ वर्णगोत्रादिकं तदा ॥१४४॥
राजन्नाङ्गिरसोऽस्मीति कुमारः प्रत्युवाच तम्।

---

(१) परमिति क० घ० च०।
(२) त्वन्येन्त्या दुःस्वप्ननाशिनीति क० ग० घ० च०।
(३) ऐन्द्रश्चदिति ङ०, ऐन्द्रं वेति च०।
(४) त्विति ङ०।
(५) कक्षीवतं कदित्यातीति क० ग० घ० च०।
(६) परोक्षे वैश्वदेवे इति ङ०।
(७) भावयव्यसुत इति ङ०।

---

(क) ऋ० २, १२६, १। (ख) ऋ० १, ११७, ६।

पुत्त्रोऽहं दीर्घतमस औचथस्य(क) ऋषेर्नृप(१) ॥ १ ४ ५ ॥
अथास्मै स ददौ कन्यां(२) दिव्याभरणभूषिताम्(३) ।
तावतश्च रथानश्वान् वीडूङ्गान् वै(४) चतुर्युजः ॥ १ ४ ६ ॥
वधूनां वाहनार्थाय धनकूप्य(५)मजाविकम् ॥
निष्काणां वृषभाणाञ्च(६) शतं शतमदात्पुनः ॥ १ ४ ७ ॥
गवां सहस्रं षष्टीश्च सर्व्वाः स्वभरिधायसः(७)(ख) ।
शतमश्वाञ्कृतं निष्कानथान् दशवधूमतः ॥ १ ४ ८ ॥
चतुर्युजो गवाश्चैव सहस्रं षष्ट्यथाधिकम्(८) ।
स्वनयाद्भावयव्याद्यः कक्षीवान् प्रत्यपद्यत ॥ १ ४ ९ ॥
प्रतिगृह्य च तुष्टाव प्रातः(९) पित्रे शशंस च ॥
एतदुत्तरसूक्तेन शतमित्यादिनोदितम्(१०) ॥ १ ५ ० ॥

---

(१) राजन्नाङ्गीरसोऽस्मीत्यादि औचथस्य ऋषेर्नृपेत्यन्तपाठः ड० चिह्नितपुस्तके न दृश्यते ।
(२) कन्याः इति ड० ।
(३) दशभारसमन्विताः इति ड० ।
(४) रथांश्चास्य दीपिनोऽश्वैरिति ड० ।
(५) धनं कूप्यमिति ड० ।
(६) निष्काणां शतमश्वानामिति ड० ।
(७) गवां सहस्रमिति श्लोकार्द्धं ड० चिह्नितपुस्तके न विद्यते ।
(८) षष्ट्युपाधिकमिति ड० ।
(९) ततः इति ड० ।
(१०) ड० चिह्नितपुस्तके, एतदुत्तरसूक्तेनेति श्लोकार्द्धस्थले, एतस्मादुत्तरे सूक्ते शतमित्यादि चोच्यते इति पाठोऽस्ति, शतमश्वाञ्कृतं निष्कानिति श्लोकार्द्धात्प्राक् पठितश्च ।

---

(क) ऋ० १, १५८, १ । (ख) ऋ० १, १२६, ५ ।

फलप्रदर्शनं तस्य क्रियते प्रायशस्त्विह।
द्वितीयान्तु पितापश्यत्सुगु[क]रित्यादिकामृचम् ॥१५१॥
कक्षीवतं[१] सर्व्वमिति भगवानाह शौनकः।
एषा तु दैर्घतमसी सानुलिङ्गा कथं भवेत् ॥१५२॥
उच्यते प्रातरि[ख]त्सूक्ते सूनोर्दानेन हर्षितः।
राज्ञस्त्वाग्निषमाद्दाय सुगुरित्यादिना किल[२] ॥१५३॥
कर्माणि याभिः कथितानि राज्ञां[३]
दानानि चोच्चावचमध्यमानि।
नाराशंसी[ग]रित्यृचस्ताः प्रतीया-
याभिः स्तुतिर्दाशतयीषु राज्ञां[४] ॥१५४॥
पश्चामन्दान् भावयव्यस्य गीता
जायापत्योर्द्वौ ऋचौ सम्प्रवादः[५]।

---

(१) काक्षीवतमिति पाठः समीचीनः।
(२) अधिगम्य गुरोर्विद्यामित्यादि सुगुरित्यादिना किलेत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न विद्यते। फलप्रदर्शनं तस्येत्यादि सुगुरित्यादिना किलेत्यन्तपाठोऽपि ख० ङ० चिह्नितपुस्तकयोर्न दृश्यते।
(३) कर्म्माणि यावन्ति कृतानि राज्ञेति ङ०।
(४) प्रतीयात् स्तुती दृष्टा यासु वरिष्ठराज्ञामिति ङ० पुस्तकान्तरञ्च।
(५) सम्प्रवादो द्वृचेनेति क० घ० च०॥

---

(क) ऋ० १, १२५, २। (ख) ऋ० १, १, ४। (ग) १०, ८५, ६।

सभ्यवादं रोमशयेन्द्रराज्ञो-
रेते तृचौ[1] मन्यते शाकपूणिः ॥१५५॥
इन्द्रेण जायापत्योर्वेतिहासं
[2]तृचेऽस्मिन्मन्यते शाकटायनः।
प्रादात्सुतां[3] रोमशां नाम नाम्ना
बृहस्पतिर्भावयव्याय राज्ञे ॥१५६॥

इति बृहद्देवतायां तृतीयोऽध्यायः॥

---

(१) सभ्यवादमस्यस्या अथ चैव ताभ्यामेते तृचौ इति ख॰ छ॰ पुस्तकान्तरञ्च।
(२) तृचे इति ग॰।
(३) सं तामिति ख॰ छ॰।

(क) ऋ॰ १, १२६, ७।

# अथ चतुर्थोऽध्यायः ।

ततस्त्व[1]मथं हरिवान्[क] विदित्वा
प्रियं सखायं स्वनयं दिदृक्षुः ।
अभ्याजगामाशु शचीसहायः
प्रीत्यार्चयत्तं[2] विधिनैव[3] राजा ॥ १ ॥
अभ्याजगामाङ्गिरसी च तत्र
दृष्ट्वा[4] तयोः सा चरणौ च वन्दे ।
इन्द्रः सखित्वादथ तामुवाच
रोमाणि ते सन्ति न सन्ति राज्ञि ॥२॥
सा बालभावादथ तां जगाद
उपोपमे अङ्ग परामृशेति ।
तां पूर्ववर्षाथ नृपः प्रहर्षा-
दन्वब्रजत्सोऽथ पतिं तु साऽब्रवीत्[5] ॥३॥

---

(१) तत्सर्वमिति ख० ङ० पुस्तकान्तरञ्च ।

(२) प्रत्यर्चितं तमिति ख० ।

(३) प्रत्यर्चितोऽसौ विधिना चेति ङ० पुस्तकान्तरञ्च ।

(४) दृष्ट्वेति ख० ङ० पुस्तकान्तरञ्च ।

(५) तां पूर्वया सान्त्यन्नृपः प्रहृष्टोवाच व्रजत्साथ पतिं पतिव्रतेति क० घ० च० ।

---

(क) ऋ० १, ८१, ४ ।

अथाग्नेये अग्निमित्युत्तरे च-
त्यद्यैन्द्राणि प्रत[क]दैन्द्र्यूगच[१]।
युवन्त[ख]मिन्द्रापर्वतौ[ग] सह स्तुता-
विन्द्रन्तु मेने यास्क एकं प्रधानं[२] ॥४॥
स्तूयेतर्चुः पर्वतो विद्धि वज्रो[३]
दिवस्तुतौ चेन्द्रमाह[४] प्रधानं।
आत्मार्वयोरथ पद्येन्द्रवाय्वो[५]रेका
वायोरुत्तरं द्विप्रधानं ॥५॥
तच पञ्चवह्णं मित्रदेवा
द्विवाद्भ्यः[६] कथिताभ्यः परे द्वे
द्वे द्वे पदे संस्तुते[७] रोदसी च
देवाखार्धर्चेन विभक्तमन्यत् ॥६॥

(१) अग्निमाग्नेये अत उत्तराणि पद्येन्द्राणि प्रतदैन्द्र्यूगेकेति ङ० पुस्तकान्तरञ्च।
(२) त्विन्द्रन्तु मेन इह यास्कः प्रधानमिति क० घ० च०।
(३) स्तुतस्तुतः पर्वतद्धि यज्ञः इति क० घ० च०।
(४) चन्द्रमाङ्करिति क० घ० च०।
(५) आत्मानवपद्येन्द्रवाय्वोरिति क० घ० च०, आत्मावायोश्चाथ पद्येन्द्र-वाय्वोरिति ग०।
(६) दिभ्य आद्याः इति ङ०।
(७) द्वे वायरे संस्तुताविति ङ०।

(क) ऋ० ८, १२, २७। (ख) ऋ० ८, ७१, ४। (ग) ऋ० ३, ५३, १।

मैत्रावरुणं सुषुमे(क)ति सूक्तं(१)
प्रप्र(ख)पोष्णं वैश्वदेवं द्वितीयं(२)।
एतत्सूक्तं(३) वैश्वदेवं तृतीयं
वैश्वदेवं स्या(४)द्बहुदेवतेषु ॥७॥
बहुशस्तु वैश्वदेवेषु संस्तवः(५)
अर्धर्चा(६) द्वैपदास्त्रैपदाश्च।
द्विप्रधाना अपि चैकप्रधाना
बहुप्रधाना अपि वैश्वदेवाः(७) ॥८॥
वैश्वदेवी मित्रावरुणी द्वितीया
तिस्रोऽश्विभ्यां तत ऐन्द्री ततोऽग्नेः।
मारुत्येका तत ऐन्द्राग्न्यनन्तरा
वार्हस्पत्या चोत्तमा स्तौति देवान् ॥९॥

(१) सुषुमेतीह सूक्तमिति ख०, ग० ङ० पुस्तकान्तरञ्च।
(२) तृतीयमिति क० घ० च०।
(३) अस्तु औचदिति ङ०।
(४) वैश्वदेवं हि स्यादिति ङ०।
(५) सम्भवः इति क० घ० च०।
(६) अर्धर्चाविति क० घ० च०।
(७) अपि ता वैश्वदेव्यः इति ङ० पुस्तकान्तरञ्च।

(क) ऋ० १, १३७, ६। (ख) ऋ० १, ४०, ७।

अथौगृषिर्वा स्तौति इध्यक्तेऽत्मा-
मात्मानं वा तेषु यं मन्यजन्म[१]।
तस्मादृचां विप्रवदन्ति केचित्
इन्द्राग्नी तस्यां तु[२] निपातभाजौ ॥१०॥
द्वावुचथ्य[क]बृहस्पती ऋषिपुत्रौ बभूवतुः।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥११॥
तां यवीयान्[३] बृहस्पतिर्मैथुनायोपचक्रमे।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यषेधत[४] ॥१२॥
इहास्मिन् पूर्वसम्भूतो न कार्य्यः शुक्रसङ्करः।
तच्छुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः[५] ॥१३॥
स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥१४॥
स जातोऽत्यतप[६]ल्लोकानेतस्मा[७]दन्धतां गतः।

(१) एवाथर्व्वाणः स्तौति प्रशंस जन्मेति क० घ० च०। एवाथर्व्वाण इत्यत्र अहमेवाथर्व्वाणः इति ग०।
(२) केचिदैन्द्री त्वेवेति क० घ० च०।
(३) कनीयानिति क० घ० च०।
(४) प्रत्यभाषतेति क० ग० घ० च०।
(५) तं शुक्रप्रतिष्ठानं तु बृहस्पतिरमर्षयदिति ङ०।
(६) अभ्यतपदिति ख० घ०, अभ्यवददिति ग० ङ० पुस्तकान्तरञ्च।
(७) चक्षुस्मादिति ख० ग० ङ०।

(क) ऋ० ८, ४६, २८।

दर्दुर्देवा सुता मेने ततोऽनन्धो बभूव च[१] ॥१५॥
स वेदिषद इत्यस्तौ[२] चतुर्भिर्जातवेदसं।
समिद्ध आप्रियोऽन्त्यैन्द्री तमित्यग्नेः पराणि षट्[३] ॥१६॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्मित्रमिति त्रिभिः।
मित्रं मैत्री वदत्येता[४] माधेनवस्य शंसति ॥१७॥
अदितिं वाथ वाप्यग्निं तथा रूपं हि दृश्यते।
अग्निं मेने दितिं त्वेव कुत्से चेह[५] च शौनकः ॥१८॥
ऋषिरच प्रसङ्गाद्वा दर्शनादानुकीर्तयेत्[६]।
विष्णोर्नुकमिति त्रीणि वैष्णवानि पराण्यतः ॥१९॥
प्रवः पान्तं चतुर्भिस्तु[७] इन्द्राविष्णू सह स्तुतौ।
षट्शाणि वा वैष्णवानि ऋषिस्त्वेत्यृचि[८] कांक्षति ॥२०॥

---

(१) तु तस्याक्षी नैते न त्वन्धतां गत इति क॰ ग॰ च॰।

(२) इत्याद्यैरिति ङ॰।

(३) आप्रः परैन्द्री षड्भिः त्वग्निं तमित्यत इति क॰ ग॰ च॰, आप्रि-त्योऽन्त्यैन्द्री प्राच्यावाग्नेः पराणि चेति ग॰।

(४) मैत्रीव देव्येतामिति ङ॰।

(५) याच्चः कुत्सो वेहेति ङ॰ पुस्तकान्तरञ्च।

(६) ऋषिरग्नेः प्रसङ्गात्वाद्दर्शनमनुकीर्त्तयदिति ङ॰।

(७) प्रवश्चतसृभिर्ऋग्भिरिति ग॰, तावां चतसृभिर्ऋग्भिरिति ङ॰ पुस्तकान्तरञ्च।

(८) तावामित्यृचीति ग॰ ङ॰ पुस्तकान्तरञ्च।

जीर्णन्तु दीर्घतमसं विप्रास्तत्परिचारिणः(१) ।
दासा अथ(२) नदीतोये दृष्टिहीनमुपादधुः(३) ॥ २१ ॥
तस्यैकस्त्रैतनो(४)(क) नाम शस्त्रेणैनमपाकृन्तत् ।
शिरश्चांसावुरश्चैव स्वयमेव न्यकृन्तत(५) ॥ २२ ॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्क्षिपन्(६) ।
(७)जनयामास चोत्थाय(८) कक्षीवत्प्रमुखानृषीन् ॥ २३ ॥

---

(१) तत्परिचारकाः इति ख० ङ० पुस्तकान्तरञ्च ।
(२) दासा वध्वेति क० घ० च० ।
(३) अवादधुरिति क० घ० च० ।
(४) त्रैनतः इति क० घ० च० ।
(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—
हत्वा दीर्घतमास्तं तु पापेन महता हतम् ।
आत्माङ्गान्यनुदश्चैव ततोऽदान्मोचितो भृशम् ॥
इत्यधिकं पठितम् ।
(६) तं नृपं समुदक्षिपदिति ङ० पुस्तकान्तरञ्च ।
(७) जनयामास चोत्थायेति श्लोकार्द्धात्प्राक्, ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—
अङ्गराजस्त्रिये युक्ता मुनिमिज्यं पुत्रकाम्यया ।
राज्ञा च प्रहितां दासीं मत्वा महातपाः ॥
इत्यधिकं पठितम् ।
(८) सोऽजीजनद्धसैकादिति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १,।१५८, ५ ।

तुष्टाव चैव सूक्ताभ्या[१]मवोधीत्यश्विनावृषिः।
प्रेति द्यावापृथिव्यौ तु[२] पराभ्यामेतदुत्तरं॥२४॥
किमाभेवं परं[३] मानो मेध्यस्याश्वस्य संस्तवः।
ईर्मां[क]ता स इति त्वस्यां नीयमानं प्रशंसति॥२५॥
स्वयूथ्यास्तस्य चैवाच बहवः संस्तुता हयाः।
नियुक्ताश्चानियुक्ताश्च प्रसङ्गादनुकीर्त्तिताः॥२६॥
संज्ञप्तवदसंज्ञप्तं हविष्यं[ख] चाह सूनवः[४]।
तस्मिन्मांसस्य सूनस्य चतुर्णां हविषस्तथा[५]॥२७॥
वासोऽधिवाससोश्चात्र स्वधिते[ग]स्तु प्रकीर्त्तनं[६]।
गात्रशूलस्थूणाना[घ]न्तु[७] स्वधितेश्च प्रकीर्त्तनं[८]॥२८॥

(१) वेति वसुताभ्यामिति ङ० पुस्तकान्तरञ्च।
(२) द्यावापृथिव्यातेति ङ० पुस्तकान्तरञ्च।
(३) परे इति ङ० पुस्तकान्तरञ्च।
(४) भविष्यं चाह भूतवत् इति ख० ङ० पुस्तकान्तरञ्च।
(५) चतुर्णां हविषस्तथेति ग०, तत्सौनस्य च मांसस्य चक्ष्णां ॥ विषा-
न्तथेति ङ० पुस्तकान्तरञ्च।
(६) यद्दिग्रस्य च कीर्त्तितमिति ख० ग०, वासाधिवाससोश्चात्र यद्ग्रीवस्य
च कीर्त्तनमिति ङ०।
(७) गात्रसूलस्थुणाश्चेति ख० ङ०।
(८) क० घ० च० चिह्नितपुस्तकेषु, गात्रसूलस्थूणानाञ्चेतिश्लोकार्द्धं न
पठितम्।

(क) ऋ० ४, २७, २। (ख) ऋ० १, १६२, ४। (ग) ऋ० १, १६२,
१८। (घ) ऋ० ५, ६२, ७।

भागस्य[१] कीर्त्तनं चाच इन्द्रापूष्णोः सह स्तुतिः[२] ।
सूक्तं यदस्य[३] वामीयं वैश्वदेवं तदुच्यते ॥२९॥
प्रवादा विविधास्तत्र देवानां चात्र कीर्त्तनं ।
अग्निस्तु वामः पलितो[क] वायुर्भ्राता तु मध्यमः ॥३०॥
घृतपृष्ठ[ख]स्तृतीयोऽत्र[४] सप्त वै रश्मयस्तु ताः ।
पराक्तु कथयन्त्यग्निं[५] यथा वर्षति पाति[६] च ॥३१॥
अहोरात्रदिना[७]न्मासानृतूंश्च परिवर्त्तनं[८] ।
पञ्चधा त्रिविधा[९] चैव षोढा द्वादशधैव च[१०] ॥३२॥
संवत्सरं चक्रवच्च पराभिः कीर्त्तयन्नृषिः ।

(१) छागस्येति ग० ङ०
(२) इन्द्रापूष्णोश्च कीर्त्तनमिति ख० ङ० ।
(३) यदस्येति ङ० ।
(४) तृतीयोऽग्निः इति ङ० ।
(५) अग्निरिति ङ० ।
(६) वातीति ख० ङ० ।
(७) अहोरात्रान् दिनानिति ङ० ।
(८) पक्षांश्च परिकीर्त्तनमिति ङ० ।
(९) पञ्चधा च त्रिधेति ख० ङ० ।
(१०) द्वादशधापि चेति ङ० ।

(क) ऋ० १, १४४, ४ । (ख) ऋ० १, १६४, १ ।

चत्रज्ञानं[१] च धेनुञ्च गौरीं वाचं सरस्वतीं ॥२३॥
धर्मं पूर्व्वयुगीयञ्च[२] साध्यान् देवगणांस्तथा।
विविधानि च कर्म्माणि त्वग्निवायुविवस्वताम् ॥२४॥
विभूतिमग्नेर्वायोश्च जगती स्थान[३]जन्मने।
हरणं रश्मिभिश्चैव[४] विसर्गं[५] पुनरेव च ॥२५॥
कर्म्मानुकीर्तनञ्चाच[६] पर्जन्याग्निविवस्वतां।
मातापुत्रौ तु वाक्प्राणौ माता वागितरः सुतः ॥२६॥
सरस्वन्तमिति प्राणा[७] वाचं प्राहुः सरस्वतीं।
शरीरमिन्द्रियैर्युक्तं चेत्रमित्यभिधीयते ॥२७॥
वेद तत्प्राण[८] एवैकस्तस्मात् चेत्रज्ञ उच्यते।
मेघः[९] शक[क] स्तस्य धूमः[१०] सलिलं वास एव वा ॥२८॥

---

(१) चेत्रज्ञानमिति ग०, चेत्रं ज्ञानमिति ङ०।
(२) पूर्व्वयुगानाञ्चेति ख० ङ०, धर्म्मपूर्व्वयुगौ पञ्चेति ग०,
(३) जगति स्थाश्विति ख० ङ०।
(४) वारः इति ख०, वारामिति ङ०।
(५) विसर्पमिति ख०।
(६) चास्येति ख० ङ० पुस्तकान्तरञ्च।
(७) प्राणः इति क० ग० घ० च०।
(८) वेण्येतत्प्राण इति ङ०।
(९) मेघे इति ख०।
(१०) धूमे इति ख०।

---

(क) ऋ० ८, ८०, ३।

सोम उग्रा(क)भवन्यस्य पावकाश्च चयोऽधिपाः।
गौरीरं तं वैश्वदेवमुपरि स्यात्पृथक् स्तुतिः ॥३९॥
इन्द्रं मित्रमिमौ सौर्य्यौ सौरी चान्या सरस्वते[1]।
मारुतेन्द्रस्तु संवादः कथेति[2] परमः स्मृतः[3] ॥४०॥
मरुतामयुज[4]स्त्वेभ्यो युग्माः सर्व्वाः[5] सदान्यथा।
एकादशी प्रथमा च मारुतस्तूच उत्तमः[6] ॥४१॥
इन्द्रस्यैव तु तत्रोक्तं कर्तृत्वमितरस्य तु।
इतिहासं पुराव्वृत्तमृषिभिः परिकथ्यते[7] ॥४२॥
समागच्छन्मरुद्भिस्तु[8] चरन् व्योम्नि शतक्रतुः।

(१) क० ख० घ० च० पुस्तकेषु, मेघः शकस्तस्य धूम इत्यादि सौरी चान्या सरस्वते इत्यन्तपाठो न विद्यते, तेषु च अत्र स्थले,—

सुक्तमत्यपस्तवं स्तितश्चाननमेव प्रशंसति।
प्रवादबहुलत्वाच्च ततः सलिलमुच्यते ॥

इति पाठो वर्त्तते।

(२) कवेतीति ख०।

(३) ततः इति ख० ङ०।

(४) मरुजः इति ङ०।

(५) तन्वेति ङ०।

(६) उत्तरः इति ग०, मारुत्यस्तिस्र उत्तरा इति ङ० पुस्तकान्तरञ्च।

(७) इन्द्रस्यैव तु तत्रोक्तमित्यादि ऋषिभिः परिकथ्यते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(८) चेति ख० ङ०।

---

(क) ऋ० १, १४६, २।

दृष्ट्वा तुष्टाव तानिन्द्रस्तेनैन्द्र[१]मृषयोऽब्रुवन् ॥४३॥
तेषामगस्त्यः संवादं तपसा वेद[२]तत्त्वतः।
स तानभिजगामाशु निरुप्यैन्द्रं हविस्तदा ॥४४॥
मरुतश्चाभितुष्टाव सूक्तैस्तदिति च[३] त्रिभिः[४]।
महश्चिदिति चैवेन्द्रं सहस्तमिति चैतया[५] ॥४५॥
निरुप्तं तद्धविस्त्वैन्द्रं मरुद्भ्यो दातुमिच्छति[६]।
विज्ञायावेत्य तद्भव्यं लिन्द्रो[७] नेति तमब्रवीत्[८] ॥४६॥
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतं।
कस्यचित्त्वथ सञ्चारे[९] चित्तमेव विनश्यति ॥४७॥
किन्न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव।
मरुद्भिः सम्प्रकल्पस्व[१०]वधीर्मा च[११] शतक्रतो ॥४८॥

---

(१) ते चैन्द्रमिति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) तपसावोधीति ख० ङ० पुस्तकान्तरञ्च।
(३) तन्विति त्रिति क० घ० च०।
(४) तन्विति पञ्चभिरिति ग०।
(५) महश्चिदित्यनेनैन्द्रं सहस्तं त ऋचाद्ययमिति ख० ङ० पुस्तकान्तरञ्च।
(६) इच्छयेति ख०, इच्छतः इति ङ० पुस्तकान्तरञ्च।
(७) तद्भावमिन्द्रः इति ख० ङ० पुस्तकान्तरञ्च।
(८) ततोऽब्रवीदिति ख० ङ० पुस्तकान्तरञ्च।
(९) त्वथंसञ्चारे इति ख० ङ० पुस्तकान्तरञ्च।
(१०) सम्प्रकल्पस्वेति ख० ङ० ॥
(११) मा नः इति ख० ङ० पुस्तकान्तरञ्च।

किं नो भ्रातरिति त्वयामिन्द्रो मान्यमुपालभत्।
अगस्त्यस्त्वरमित्यस्यां क्रुद्ध[१]मिन्द्रं प्रशामयत्[२] ॥४९॥
प्रादात्संवननं[३] कृत्वा तेभ्य एव च तद्धविः।
पूर्व्वया सान्त्वयन्निन्द्रो ह्यगस्त्यं खेदकाम्यया ॥५०॥
एवं संवननं कृत्वा प्रादात्तेभ्यः स तद्धविः[४]।
सुते[५] चकार सोमे च[६] तानिन्द्रः सोमपीथिनः[क] ॥५१॥
तस्माद्दिव्याग्निपातेन[७] ऐन्द्रेषु[८] मरुतस्तु तान्[९]।
प्रीतात्मा पुनरेवर्षिस्तांस्तुष्टाव पुनः पृथक्[१०] ॥५२॥
मरुतः प्रेति सूक्ताभ्या[११]मिन्द्रं षड्भिः परैस्तु सः[१२]।

(१) क्रुद्धमिति ख० ङ० पुस्तकान्तरञ्च।
(२) प्रसादयदिति ख० ङ०. प्रसाधयदिति पुस्तकान्तरम्।
(३) सङ्गमनमिति क० ग० घ० च०।
(४) पूर्व्वया सान्त्वयन्निन्द्र इत्यादि स तद्धविरित्यन्तपाठः, क० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(५) सूते इति ग०।
(६) सोमेऽथेति ख० ङ० पुस्तकान्तरञ्च।
(७) निपातेष्विति ङ० पुस्तकान्तरञ्च।
(८) मन्त्रेष्विति ख०।
(९) मरुतः स्तुताः इति ङ० पुस्तकान्तरञ्च।
(१०) पृथक् पृथगिति ख० ङ० पुस्तकान्तरञ्च।
(११) प्रतिसूक्ताभ्यामिति ख० ङ० पुस्तकान्तरञ्च।
(१२) गायन् षड्भिः शचीपतिरिति ख० ङ० पुस्तकान्तरञ्च।

(क) ऋ० १०, १५, ८।

ऋतुस्नाता[१] मृषिर्भार्यां लोपामुद्रां यशस्विनीं ॥५२॥
उपजल्पितुमारेभे रहःसंयोगकाम्यया ।
ताभ्यां सा त्वब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितं ॥५४॥
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ।
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ॥५५॥
उक्तेनं[२] कृतवानस्मिन्[३] ब्रह्मचार्युत्तमे जगौ ।
प्रशंस्य[४] तं परिष्वज्य गुरू मूर्ध्न्यवजिघ्रतुः ॥५६॥
स्मितेनमाहतुस्तोभावनागा असि[५] पुत्रक ।
युवो[क]रजांसीति ततः सूक्तैः पञ्चभिरश्विनौ ॥५७॥
अगस्त्य एव तुष्टाव सूक्तेन कतरे तुण[६] ।
द्यावापृथिव्यौ सूक्तेन आनो विश्वान् दिवौकसः ॥५८॥
पितु[ख]मस्त्रं समिद्धाग्न्यो अग्निमग्ने नयेति च[७] ।
बृहस्पतेरनर्वाणं[ग] कंकतोपनिषत्परं[८] ॥५९॥
अपां तृणानां सूर्यस्य केचिदेतां स्तुतिं विदुः ।

---

(१) ऋतौ स्नातामिति क० घ० च० ।
(२) न त्वेनः इति ख० ग०, नत्वेतदि ङ० पुस्तकान्तरञ्च ।
(३) चस्मीति ख० ग० ङ० ।
(४) प्रशस्येति ग० ङ० ।
(५) चोभौ ह्यनागोऽसीतीति क० ग० घ० च० ।
(६) कतरेति परेयात्विति क० घ० च०, सूक्तेन कतरेति त्वि ङ० ।
(७) समिद्धो ह्याग्नियोऽग्ने च नयाग्नये इति ख० ङ० पुस्तकान्तरञ्च ।
(८) परेति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ३४, १ । (ख) ऋ० १, ६१, ७ । (ग) ऋ० १, ९०, १ ।

ददर्श तद्‌गतश्चो वा[१] विषन्नं विषमंकया ॥६०॥
अदृष्टाख्यो विश्वरूपः[२] सूक्तस्यांशोऽथ तु त्वृचः[३]।
असौ[४]कृत्समदोऽग्निं त्वं[५] जातवेदस[६]मामिचः ॥६१॥
यज्ञेनाथ समिद्धोऽग्निरतोऽग्निं[७] सप्तभिर्ऋषे[क]।
संयुज्य[८] तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः ॥६२॥
अदृश्यत मुहूर्त्तेन दिवि च व्योम्नि चेह च।
तमिन्द्रमिति मत्वा तु[९] दैत्यौ भीमपराक्रमौ ॥६३॥
धुनिश्च चुमुरिश्चैव[१०] सायुधावभिपेततुः।
विदित्वा स तयोर्भावमृषिः[११] पापचिकीर्षतोः ॥६४॥
यो जात इति सूक्तेन कर्म्मण्यैन्द्राण्यकीर्तयत्।

(१) त्विति ख० ङ० पुस्तकान्तरञ्च।
(२) अदृष्टाख्यो मतरूपः इति ख० ङ० पुस्तकान्तरञ्च।
(३) ऋचः इति ग०।
(४) स्तौतीति ङ० पुस्तकान्तरञ्च।
(५) अग्नित्वमिति ग० ङ०।
(६) जातवेदस्यमिति ख० ग०।
(७) यातोऽग्निमिति क० घ० च०, अग्निरिति ङ०।
(८) संयोज्येति ख० ङ० पुस्तकान्तरञ्च।
(९) तौ इति ङ०।
(१०) चोभाविति ख० ङ० पुस्तकान्तरञ्च।
(११) कृषिरिति क० घ० च०।

(क) ऋ० २, १७, ७।

उक्थेषु[१] कर्मस्वैन्द्रेषु भौस्तावाद्भु विवेश ह[२] ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्हयत् ।
निहत्य तौ गृत्समदमृषिं[३] शक्रोऽभ्यभाषत ॥६६॥
यथेष्टं मास[४]खे पश्य प्रियस्त्वं[५] ह्यागतोसि[६] मे ।
वरं गृहाण मन्तस्त्वमचयं[७] चास्तु ते तपः ॥६७॥
प्रह्व[८]स्तं प्रत्युवाचर्षिरस्माकं वदतां वरः[९] ।
तनूनामस्तु चारिष्टिर्वाक्चास्तु हृदयङ्गमा ॥६८॥
सुवीरा[क]रयिमन्त[ख]श्च वयन्त्वामिन्द्र धीमहि[१०] ।
इन्द्र[११]त्वाच्च विजानीमो वयं जन्मनि[१२] जन्मनि ॥६९॥

(१) कीर्त्येष्विति क० घ० च० ।
(२) भौतौ सुषुपतुस्तदेति ख० ङ० पुस्तकान्तरञ्च ।
(३) इदमिति ङ० पुस्तकान्तरञ्च ।
(४) मांसमिति पाठः सङ्गतः ।
(५) मास खे पश्य प्रियस्त्वमिति क० घ० च० । अथ, मांसं खे पश्य प्रियस्त्वमिति पाठो विशुद्धः ।
(६) प्रियत्वं चागतोऽसीति ङ० ।
(७) मन्तस्त्वाच्चयमिति क० घ० च० ।
(८) प्रह्वः इति क० घ० च० ।
(९) वरेति क० ग० घ० च० ।
(१०) इन्द्र वामहे इति ख०, इन्द्रमीमहे इति ङ० ।
(११) इन्द्रमिति ङ० ।
(१२) जनीति क० ग० घ० च० ।

(क) ऋ० ६, १९, ५ । (ख) ऋ० १०, ७४, १ ।

त्वद्गत[१]स्तेव मे भावो मापगात्त्वद्रथीतरः[२]।
निरुक्तं तदिदं चार्षमिन्द्रश्रेष्ठान्युचान्यया ॥७०॥
वत्रे वरमिदं सर्व्वं तदाकर्ण्य शचीपतिः[३]।
तथेत्युक्त्वा तुराषाट् त्वां[४] पाणौ जग्राह दक्षिणे ॥७१॥
ऋषिस्तस्य सखित्वेन पाणिना पाणिमस्पृशत्।
सहितौ जग्मतुस्तेवं महेन्द्रसदनं[५] प्रति ॥७२॥
तत्रैनमार्हयत्प्रीत्या स्वयमेव पुरन्दरः।
कर्म्मणा विधिदृष्टेन तमृषिस्त्वाभ्यपूजयत्[६] ॥७३॥
सखित्वाच्च पुनस्तेन[७]मुवाच हरिवाहनः।
गृत्समादयसे यस्मात्त्वमस्मानृषिसत्तम ॥७४॥
तस्माद्गृत्समदो नाम शौनहोत्रो[८] भविष्यसि।
ततो द्वादशभिः सूक्तैस्तुष्टावेन्द्रं शुधी[९][क]त्यृषिः ॥७५॥

---

(१) त्वां तत इति क० घ० च०।
(२) मापगाच्च रथीतरः इति ख० पुस्तकान्तरञ्च।
(३) निरुक्तं तदिदं चार्षमित्यादि तदाकर्ण्य शचीपतिरित्यन्तपाठः, क० ग० घ० च० चिह्नितपुस्तकेषु, नोपलभ्यते।
(४) त्वामित्यत्र तमितिपाठः शुद्धः। रथाकृन्नित्विति ख० ङ० पुस्तकान्तरञ्च।
(५) महेन्द्रभवनमिति ख० ङ० पुस्तकान्तरञ्च।
(६) वाभ्यपूजयदिति क०। तमृषिं चाभ्यपूजयदिति ख० ग० घ० च०।
(७) एवमिति पुस्तकान्तरम्।
(८) शौनकोऽत्र इति ख०।
(९) इन्द्रश्रुधीत्यृषिरिति क० पुस्तकान्तरञ्च।

---

(क) ऋ० २, २५, १९।

ददर्श संस्तुवन्नेव तत्र स ब्रह्मणस्पतिम्।
बृहस्पतिं तु तुष्टाव बृहस्त्रिष्टुभिरेव च[१] ॥७६॥
स तमप्यभितुष्टाव[२] चतुर्भिरत[३] उत्तरैः।
गणानां त्विमित्यस्यां[४] सहेन्द्राब्रह्मणस्पती ॥७७॥
बृहस्पतिं प्रसक्तादा[५] ब्रह्मणस्पतिमेव च[६]।
तुष्टाव कर्मणैकेन प्रभावस्यान्तरन्तयोः[७] ॥७८॥
मित्रावरुणदक्षांशतुविजात(क)भगार्यम्णाम्[८]।
आदित्यानामिमाः [९]सूक्तमिदं वारुणमुच्यते[१०] ॥७९॥

---

(१) बृहस्पतिस्तु तुष्टाव दृष्ट्वा त्रिष्टुस्तवैः सहेति ख०, दृष्ट्वा त्रिष्टुस्तवैः सहेति ङ०।
(२) अप्यभितुष्टावेति क० ख० ग० पुस्तकान्तरञ्च।
(३) चतुर्भिरिति उत्तरैरिति ग०, चतुर्भिरित उत्तरैरिति ङ०, चतुर्भिरेत उत्तरैरिति पुस्तकान्तरम्।
(४) अस्या इति ङ०, विश्वामित्रस्येति ख०।
(५) प्रसक्तत्वादिति ख० ङ०।
(६) ब्रह्मणस्पतिमेव वेति ङ०।
(७) द्वयोरिति ग०। श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्नोपलभ्यते।
(८) तुविजातभगार्यमामिति ख०।
(९) इमाप्युक्तमिति ख०। इमाः इत्यत्र इदमिति पाठो विशुद्धः।
(१०) वरुणमिति ग०।

---

(क) ऋ० १, १३१, ७।

(१)घृतव्रता वैश्वदेवमुत्तमैन्द्रं परन्तु यत्(२)।
प्रहि क्रतुमिति त्वष्टामिन्द्रासोमौ यत्र स्तुतौ ॥८०॥
सरस्वति त्वमित्यग्निरूर्द्ध्वे मध्यमा तु वाक्(३)।
बृहस्पतिन्तु यो नस्तु(४) उत्तमा मरुतस्तुतिः(५) ॥८१॥
अस्माकं वैश्वदेवन्तु सूक्तादावुत्तमस्य तु(६)।
द्यावापृथिव्योर्द्वे त्वाद्यौ(७) तथैवैन्द्रौ(८) परे ततः ॥८२॥
द्वे द्वे राकासिनीवाल्योः पक्षैकं गोग्याद्यथान्यया(९)।
(१०)रौद्रं मारुतन्तु परं(११)मा ते धारावरा इति ॥८३॥

---

(१) वायव्यीयो न इत्याद्या दुःस्वप्नाद्यप्रयाग्निगीः। श्लोकार्द्धमेतत् ग॰ चिह्नितपुस्तके घृतव्रतेति श्लोकात् पूर्व्वमधिकं पठितं।
(२) परं यत इति ख॰, परं तत इति ङ॰।
(३) माध्यमानुवागिति ख॰।
(४) बृहस्पते स्तुतिर्यो मा इति ख॰, यो न स्त इति ग॰।
(५) बृहस्पते स्तुतिर्यो उ त्तममरुत्सुवतां स्तुतिः इति ङ॰।
(६) अस्माकं वैश्वदेवं स्यात् सूक्तादावस्य चास्य ऋगिति ग॰, स्यादस्या ऋक् चान्तिमास्य त्विति ङ॰ पुस्तकान्तरञ्च।
(७) ऋग्द्यावापृथिवीत्यृचेति क॰ घ॰ च॰, द्यावापृथिव्योस्त्वाद्यौ द्वे इति ख॰। द्वे इत्यत्र वा इति ग॰।
(८) वाथ चैन्द्र्या इति ग॰, चैन्द्रौ वर्ग्गौ इति ङ॰ पुस्तकान्तरञ्च।
(९) तथान्ययेति ग॰, बहुभुगवाथन्तया स्तुताः इति क॰ घ॰ च॰।
(१०) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च रौद्रमित्यस्मात् पूर्व्वं, तत्पूर्व्वे द्वे ऋचौ कुह्वाः कुहूमहमिति स्तुते। तदुत्तरे द्वे अनुमतेरन्वनो न्विति ते स्तुते। धातुस्तवस्तथादौ धाता दधाति नो रयिम्(क)। इत्यधिकं पठितं।
(११) रौद्रं स्यात् परमारुतमिति पुस्तकान्तरम्।

---

(क) ऋ॰ १, १, ३।

वामदेवो मृगान् दृष्ट्वा विश्वस्तेभ्य ऋषिः स्वयम्[१]।
[२]अपाश्नपादुपेत्यत्र स्तुतः सूक्ते ततः[३] परे ॥८४॥
तुभ्यमित्यार्भवे[४] सूक्ते साविचादाश्विनम्परम्[५]।
सोमः पूषादितिश्चैव सोमापूष्णोन्यया स्तुताः ॥८५॥
वायव्ये[६] वेन्द्रवायव्या अन्यास्तु प्रउगा[क]स्तृचाः[७]।
प्रेत्यृक् स्तौति हविर्धाने अग्निस्तत्र निपातभाक् ॥८६॥
द्यावापृथिव्यौ द्यावेति हविर्धाने ततः परे।
[८]स्तुतिन्तु[९] पुनरेवेच्छन्निन्द्रो भूत्वा कपिञ्जलः ॥८७॥

---

(१) वामतस्तु मृगान् स्तौत्यध्वनि निप्रस्थितांस्तु हि। इति क० घ० च०, मृगं दृष्ट्वेति ग०।

(२) ग० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च अपान्नपादित्यस्मात् पूर्वं स्तुहि श्रुतमिति त्वस्यां रुद्रमस्तौत्प्रसादयन्नित्यधिकं पठितं।

(३) त्वत इति पुस्तकान्तरम्।

(४) इत्यार्तवे इति ख० ङ० पुस्तकान्तरञ्च।

(५) श्लोकार्द्धमेतत् ग० चिह्नित पुस्तके नोपलभ्यते।

(६) वायव्यै इति ग०।

(७) वायव्ये चैन्द्रवायवी पश्चाच प्रउगास्तृचा इति क० ग० घ० च०।

(८) ङ० चिह्नितपुस्तके पुस्तकान्तरे च स्तुतिमिति श्लोकार्द्धात् प्राक्, वायवोयो म इत्येषा दुःस्वप्नाघ्यप्रयाग्निनीति श्लोकार्द्धमधिकं दृश्यते।

(९) स्तुतन्त्विति ख०।

---

(क) ऋ० १०, १३०, ३।

चर्षेर्जिगमिषोराग्नं ववाग्ना[क]स्याय[१] दक्षिणाम् ।
स तमार्षेण सम्प्रेक्ष्य चक्षुषा पक्षिरूपिणम् ।
पराभ्यामभितुष्टाव सूक्ताभ्यान्तु कनिक्रदत्[ख] ॥८८॥
प्रग्नास्य गायंस्तपसाऽभ्यगच्छ[२]-
दृष्यर्पितामेकशतञ्च पुत्रान् ।
स गाधिपुत्रस्तु जगाद सूक्तं
सोमस्य मेत्याग्नेयं यत्परञ्च[३] ॥८९॥
वैश्वानरीयेति[४] समित्समिद्धा
प्रोदे आग्नेये[५] उत्तरे लव[६] सूक्ते ।
द्यावापृथिव्यौ तु निपातभाजा[७]
वापोऽथ देवाः पितरश्च मित्रः[८] ॥९०॥
आग्नेयेषु दृश्यन्ते स्तुतास्तु[९]-

(१) ववासे प्रतीति ख० ङ० पुस्तकान्तरञ्च ।

(२) अध्यगच्छन्निति ङ० पुस्तकान्तरञ्च ।

(३) मेत्यग्नये तत्परे चेति ख० ङ० पुस्तकान्तरञ्च ।

(४) वैश्वानरीयेऽथेति ख० ङ० पुस्तकान्तरञ्च ।

(५) प्रियो हे चेति ख० ङ० पुस्तकान्तरञ्च ।

(६) लस्येति ख० ङ० पुस्तकान्तरञ्च । उत्तरेत्यन्येति ग० ।

(७) द्यावा पृथिव्या उभसो निपाता इति ख० ग० ङ० पुस्तकान्तरञ्च ।

(८) आपोऽथ देवा पितरोऽथ मित्र इति ख० ग० ङ० पुस्तकान्तरञ्च ।

(९) क० घ० च० चिह्नितपुस्तकेषु स्तुतास्तु इत्यत्र तु इति पाठो न दृश्यते ।

(क) ऋ० ३, २, २ । (ख) ऋ० १, १२८, १ ।

वैश्वानरो वरुणो जातवेदाः।
स्तूयेतैका यत्र यत्रास्तुतिर्वा[१]
नैपात्यांस्तां[२]स्रोपमार्थांश्च[३] विद्यात् ॥९१॥
राजर्षयो गृत्समदा वसिष्ठा
भरद्वाजाः कुशिको गौतमाश्च।
विश्वेऽश्विनावङ्गिरसोऽत्र योऽदिति-
र्भोजाः कण्वो[४] भृगवो रोदसी दिशः ॥९२॥
सावित्रसौम्याश्विन[५]मारुतेषु
ऐन्द्राग्नेये रौद्रसौर्य्यौषसेषु[६]।
आदावन्ते सूक्तमध्ये स्तुतास्तु[७]
न व्याप्नन्ति देवताः सूक्तभाजः[८] ॥९३॥
अग्नेः सप्तदशोऽध्याय ऊर्द्ध ऊषुण ऊतये[क]।

---

(१) एको यत्र तत्रान्यस्तुतिर्वेति ख० ङ० पुस्तकान्तरञ्च।

(२) निपात्यर्थाः इति क० ग० घ० च०।

(३) उपमार्थांश्चेति पाठः साधुः।

(४) कल्पा इति ख० ङ० पुस्तकान्तरञ्च।

(५) सौर्य्याश्विनेति ख० ङ० पुस्तकान्तरञ्च।

(६) सौम्यौषसेष्विति ख० ङ० पुस्तकान्तरञ्च, वैषिसेष्विति च०।

(७) स्तुतास्ताः इति ङ० पुस्तकान्तरञ्च।

(८) भ्रन्ते देवतां सूक्तभागिनीमिति पुस्तकान्तरम्, सूक्तभाजा इति ग०, सूक्तभागिगामिति ङ०।

---

(क) ऋ० १, ४, १।

एते काव्याहचौ यौष्यौ ष्वञ्जन्ति लेति पञ्च च[१] ॥९४॥
ग्रेषा बड्भ्यो यूपेभ्यो[२] वैश्वदेवी त्वृगष्टमी[३]।
अंह्रा[क] न्या अश्विनी योक्ता[४] षष्ठमैन्द्राग्र[५]मुच्यते ॥९५॥
वैश्वदेव्यग्निमुखसं[६] दधिक्राव्णेति[७] चैतया।
आग्नेन्द्री त्वग्न इन्द्रेति परा[८] वैश्वानरस्तुचः ॥९६॥
प्रयन्तु मारुता[९] स्वान्या ग्रतधारक्रुत्स्तवः।
प्र वो वाजा ऋतू[१०] स्तौति ऋत्विजः स्तौति[११] मन्त्रतः॥९७॥
पुरीष्यास[१२] [ख] इति त्वस्माभ्धिष्णयानग्नीन् प्रशंसति।

---

(१) एते काण्वगाहचौ चोभौ यौष्यौ ष्वञ्जन्ति पञ्च चेति ख०।
(२) ग्रेषेभ्यो बड्यूपेभ्य इति ग०।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेवीत्वृगष्टमीति पुस्तकान्तरम्।
(४) स्वान्ता प्रग्रमना योक्तेति च०।
(५) स्वान्ताः प्रग्रमनाः योक्त्रैन्द्राग्नी ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च।
(६) अग्निमुखसं वैश्वदेवीति क० ख० ग० घ० च०।
(७) दधिक्रामितीति क० ग० घ० च०।
(८) अग्नीन्द्री त्वग्न इन्द्रयन् परेति ङ० पुस्तकान्तरञ्च।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च।
(१०) ऋतुनितिपाठः समीचीनः।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च।
(१२) पुरीष्यास इति ग०।

---

(क) ऋ० १, १९१, ७। (ख) ऋ० ३, २२, ४।

ज्ञेया(१)श्चैव तु होतारस्ते दैव्याश्चैव तत्र तु(२) ॥९८॥
त्रयोविंशतिरैन्द्राग्नी इच्छन्तीति पराण्यतः।
सूक्ते प्रेति तु नद्यश्च विश्वामित्रं समूदिरे(३) ॥९९॥
(४)पुरोहितः सन्निज्यार्थं सुदासः सोऽहरद्धनम्।
विपाट्छुतुद्र्योः सम्भेदं शमित्येते उवाच ह ॥१००॥
संवादास्तत्र दृश्यन्ते द्विवद्बहुवदेकवत्।
अच्छेत्यर्द्धर्चे पञ्चो वा नदीष्वप्येकवन्ति ते ॥१०१॥
आद्ये द्वृचे द्विवत्त्वार्द्धं विश्वामित्रवचःश्रुतेः।
एताभिर्ऋग्भिर्वा नद्य ऋषिं बहुवदूचिरे ॥१०२॥
षष्ठ्यष्टम्यो(५)श्चतुर्थ्याश्च दशम्याश्चेतरा ऋषेः।
सप्तम्यामृचि षष्ठ्याश्च यौ देवौ(६) परिकीर्तितौ ॥१०३॥
निपातिनौ तु तौ ज्ञेयौ त्वैन्द्रापार्वत्यृगुत्तमे(७)।
करोति पुत्रिकां नारी(८) यथा दुहितरन्तथा ॥१०४॥

---

(१) यूथा इति ख०।
(२) तत्र हेति ख० ङ०।
(३) विश्वामित्रः समूहिरे इति ख० ग० पुस्तकान्तरञ्च, स संवदन्निति क० घ० च०।
(४) पुरोहित इत्यादि श्लोकत्रयं क० घ० ङ० चिह्नितपुस्तकेषु नोपलभ्यते।
(५) षष्ठ्यष्टम्योरिति पाठः साधुः।
(६) यौदकौ इति ग०।
(७) पार्वत्यर्गुत्तमेति ङ० पुस्तकान्तरञ्च।
(८) नामेति ख० ङ० पुस्तकान्तरञ्च।

तस्यां सिञ्चति रेतो वा[१] तच्छायदिति कीर्तितम्।
रिक्थस्य दुहितुर्दानं नेत्यृषि प्रतिषिध्यते[२] ॥१०५॥
तस्याश्चैव[३] यवीयांसं भ्रातरं ज्येष्ठवत्सुतं।
सुदासस्य महायज्ञे दक्षिणा गाधिसूनवे[४] ॥१०६॥
निगृहीतं बलाच्चेतः[५] सोऽवसीदद्विचेतनः।
तस्मै [६]ब्राह्मीन्तु सौरीं वा नाम्ना वाचं ससर्परीं॥१०७॥
सूर्य्यवयादिहागत्य ददुस्ते[७] जमदग्नयः।
कुशिकानां ततः सा वागमतिन्तामपाहनत् ॥१०८॥
उपेत्य चाख्यां[८] कुशिकान् विश्वामित्रो बुबोध यत्।
लब्ध्वा वाचं च हृष्टात्मा[९] तानृषीन् प्रत्यपूजयत्[१०] ॥१०९॥
ससर्परीरिति द्वाभ्यामृग्भ्यां वाचं स्तुवन् स्वयम्।
स्थिरावित्यनसो[क]ऽङ्गान्यनडुह[११]श्च गृह्णन् व्रजन् ॥११०॥

(१) रेतो धा इति ङ० पुस्तकान्तरञ्च।
(२) प्रतिषेधतीति ख० ङ० पुस्तकान्तरञ्च।
(३) तस्याश्चाहेति ख० ङ० पुस्तकान्तरञ्च।
(४) प्रक्तिना गाधिसूनवे इति क० ग० घ० च०।
(५) गृहीत्वा बलात्मेतः इति ख० ङ० पुस्तकान्तरञ्च।
(६) तस्येति क० घ०।
(७) तां ददुरिति ख० ङ० पुस्तकान्तरञ्च। आगत्येत्यत्र आहृत्येति क० ग० घ० च०।
(८) उपेति चाख्यां कुशिकानिति क० घ०, उपेत्य वाचं कुशिकानिति ङ०।
(९) प्रतिष्ठात्मेति ख० ङ० पुस्तकान्तरञ्च।
(१०) अन्वचेतयदिति ङ० पुस्तकान्तरञ्च।
(११) इत्यनसाङ्गान्यनडुहमिति क० घ०। अनडुहमित्यत्र अनडुहः इति ङ०।

(क) ऋ० ३, १०, १०।

(१)अनसोऽङ्गानि चोत्थाप्य अनड्वाहौ गृहात्मजौ।
ततश्च स्वशरीरञ्च गृहान् स स्वयमाप ह ॥११११॥
रथञ्च स्वशरीरेण गृहान् गच्छन् परादृदे।
पराश्वतस्रो याश्चात्र वसिष्ठद्वेषिणीर्विदुः(२) ॥११२॥
विश्वामित्रेण याः(३) प्रोक्ता अभिशापा इति स्मृताः।
द्विषद्द्वेषास्तु ताः प्रोक्ता विद्याश्चैवाभिचारिकाः(४) ॥११३॥
वसिष्ठास्ता(५)न शृण्वन्ति तदाचार्य्यकसम्मतम्।
कीर्त्तनाच्छ्रवणाद्वापि महान् दोषः प्रजायते(६) ॥११४॥
शतधा भिद्यते मूर्द्धा कीर्त्तितेन श्रुतेन वा।
तेषां बालाः प्रमीयन्ते तस्मात्तास्तु न कीर्त्तयेत् ॥११५॥
विश्वांश्च देवां(७)स्तुष्टाव चतुर्भिरिममित्यृषिः।
अस्तौद्विश्वात्मना सर्व्वान् मन्यमानः परं पदम् ॥११६॥

---

(१) अनस इत्यादिसार्द्धश्लोकः क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नेष्यते। तेषु अस्मिन् स्थले, तन्वश्च स्वां शरीरञ्च गृहानाच्छन् परीदद इति पाठोऽस्ति।

(२) वसिष्ठद्वेषिण्यः स्मृताः इति क॰ ख॰ ग॰ घ॰।

(३) त्विति क॰ ख॰ ग॰ घ॰ च॰।

(४) विद्वेषिण्यः स्मृता विद्यादभिचारेषु शब्द्यते। इति क॰ ग॰ घ॰ च॰।

(५) त्विति ख॰ पुस्तकान्तरञ्च, ते इति ङ॰।

(६) श्लोकार्द्धमेतत् क॰ घ॰ चिह्नितपुस्तकयोर्न दृश्यते।

(७) विश्वान् देवांश्चेति ङ॰ पुस्तकान्तरञ्च।

[१]देवानामसुरत्वं तदेकं महदितीरयन्।
अश्विनौ मित्र ऋभवो[२] धेनुर्मित्र इहेह वः ॥११७॥
[३]वैश्वदेवीति विज्ञेया मैत्री मित्राय पञ्च तु।
ऐन्द्रार्भवस्तृचस्त्वार्भवे सूक्तः स उत्तमः[४] ॥११८॥
[५]पूर्व्वे द्वृचे निपातीन्द्र उषो वाजेन पञ्चमात्।
उषस्यादुत्तरे षड्भिः स्तुता ऋग्देवता द्वचे:[६] ॥११९॥
ऐन्द्रावरुणः प्रथमो वार्हस्पत्यस्ततः परः[७]।
पौष्णसावित्रसौम्याश्च मैत्रावरुण उत्तमः[८] ॥१२०॥
तुष्टाव जमदग्निश्च[९] तेन देवा वृता दृधौ।
देवर्षिपितृपूजार्थं य अन्नाण्यपचच्छुनः[१०] ॥१२१॥

---

(१) यस्तौविश्वात्मना सर्व्वानित्यादि महदितीरयन्नित्यन्तपाठः क० ग० घ० चिह्नितपुस्तकेषु नोपलभ्यते।

(२) ऋतवः इति क० घ० च०।

(३) वैश्वदेवीति श्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।

(४) उत्तमे इति ख० ङ० पुस्तकान्तरञ्च।

(५) पूर्व्वे द्वृचे इति श्लोकार्द्धं क० ख० घ० चिह्नितपुस्तकेषु नेष्यते।

(६) औषसादुत्तरास्त्वन्ये षट् पृथग्देवतास्तृचाः इति क० ख० ग० घ० च०।

(७) तथापरः इति ग०। तदुत्तरः इति ङ०।

(८) वसामन्यस्तु यस्तृचः इति ङ० पुस्तकान्तरञ्च।

(९) जमदग्निस्तु इति ख० ङ० पुस्तकान्तरञ्च।

(१०) यथाचान्नाश्रियच्छुन इति क० ग० घ० च०।

यस्य वै श्येनरूपेण आहर[1]द्द्युवशा मधु।
सोऽग्निन्तु पञ्चदशभिरिन्द्रं षोडशभिः परैः ॥१२२॥
ऋषिस्त्वामिति तुष्टाव सूक्तैरेतैस्तु[2] गौतमः।
स भ्रातरमिति त्वासु[3] तिसृष्वग्निर्निपातभाक् ॥१२३॥
वरुणेनाभिसंस्तौति प्राङ्क[4]रन्ये निपातितम्।
लिङ्गोक्तदेवते सूक्ते एके[5] प्रत्यग्निरेव तु[6] ॥१२४॥
ऋषिर्बोधदिति द्वाभ्यां स्तौति सोमकमेव तु[7]।
तस्यैव वायुरर्थाय[8] पराभ्यामश्विनौ स्तुतौ ॥१२५॥
अञ्जसानुजनिष्येऽहं[9] ब्रुवाणं गर्भ एव[10] तम्[11]।
अन्वगात्त्वदितिः[12] पुत्रमिन्द्रमात्महितैषिणी ॥१२६॥

---

(१) यस्य च श्येनरूपेण चाहरदिति ख० ङ० पुस्तकान्तरञ्च।
(२) एति स्त्विति ग० घ०, एति चेति ङ० पुस्तकान्तरञ्च।
(३) त्वाच्चिति ङ०।
(४) अभिसंस्तौत्या प्राङ्करिति क० ग० घ० च०।
(५) लिङ्गोक्तदैवतं सूक्तमेते इति क० घ०।
(६) लिङ्गोक्तैर्देवते सूक्ते एके प्रत्यग्निरित्युभे, इति ङ०।
(७) सोमकभूपतिमिति ङ० पुस्तकान्तरञ्च।
(८) वायुषोऽर्थायेति ख० ङ० पुस्तकान्तरञ्च।
(९) जनिष्यामेति क० ख० च०, जनिष्याया इति ग०।
(१०) गर्भमेवेति क० ग० घ० च०।
(११) त्विति क० ख० ग० घ० च०।
(१२) अन्वगाददितिरिति ङ० पुस्तकान्तरञ्च।

स जातमात्रो युद्धाय ऋषिमेवाजुहाव तं(१) ।
योधयन्(२)वामदेवस्तं कृत्वात्मनि बलं तथा ॥१२७॥
दिनानि दश रात्रीश्च(३) विजिग्ये चैनमोजसा ।
स तद्व इम(४)मित्यस्यां विक्रोशन्नृषिसंसदि ॥१२८॥
स्वयमेवाभितुष्टाव(५) नकि(क)रिन्द्रेति(६) गौतमः ।
किमादुतासीति चास्यां(७) मन्युं मध्ये(८) पराणुदत् ॥१२९॥
अथास्य रूपवीर्य्याणि धैर्य्यकार्य्याणि तान्यृषिः(९) ।
विविधानि च कर्म्माणि प्रशंसादितये तथा ॥१३०॥

---

(१) स जातमात्रं युद्धायेति क० ख० ग० घ० च० ।
(२) योधयेदिति क० ख० घ० च० ।
(३) रात्र्यश्चेति क० ग० घ० च० ।
(४) सतश्च इत्यमिति ग० ।
(५) स्वयं तेनाभितुष्टावेति ग०, स्वयमेवाभितुष्टावेति ङ० पुस्तकान्तरञ्च ।
(६) इन्द्रयेति ङ० ।
(७) किमादुतासीदित्यस्यामिति ङ० पुस्तकान्तरञ्च ।
(८) मन्युमर्धे इति क० ग० घ० च०, मन्युमध्ये इति ख० ।
(९) धैर्य्याण्यार्य्याणि चारिश्चिति क०, धैर्य्यायद्धाणि चारिश्चिति घ० च०, तान्यृषिरिति ङ० ।

---

(क) ऋ० १, २७, ८ ।

अयमित्यथ वै सूक्ते[१] तृचे स्तुतिर्न्तस्य हि[२]।
प्रसुषविभ्यो नवभिर्ऋग्भिः श्येनस्य[क] संस्तवः ॥१२१॥
पराभिस्त्वेति पञ्चर्चे सोमेनेन्द्रः स्तुतः[३] सह।
सोमप्रधाना[४]मेतान्तु क्रोष्टुकि[५]र्मन्यते स्तुतिं ॥१२२॥
दिवश्चिदिति चानेन तृचेनेन्द्रेण संस्तुतः[६]।
उषसं मध्यमां मेने त्वाचार्य्यः[७] शाकटायनः ॥१२३॥
वाममित्यृक्स्तुतास्त्वाच[८] भगः पूषेति चार्य्यमा।
कक्ष्वती[ख]ति पूषोक्तोऽदन्तकः स इति श्रुतेः ॥१२४॥
अस्माकमुत्तमं सूर्य्यं स्तौतीत्याहाश्वलायनः[९]।

---

(१) अहमित्यात्मसंस्तवः इति ख० ङ०, अहमित्यास्त्वसंस्तावः इति ग०।
(२) तृचे स्तुतिविसस्य चेति ख०, तृचे स्तुतिरिवास्य चेति ङ० पुस्तकान्तरञ्च।
(३) पराभिस्त्वेव पञ्चर्चे सोमेन्द्रः संस्तुतः इति क० घ०, सोमेन्द्रौ च स्तुतः इति ग०।
(४) सोमप्रधानमिति क० ख० ग० घ० च०।
(५) क्रोष्टुकः इति क० घ० च०।
(६) चैतेन ते तृचे नेन्द्रसंस्तुतेति क० घ० च०, इन्द्रसंस्तुतामिति ग०।
(७) मेन आचार्य्यः इति ख० ङ० पुस्तकान्तरञ्च।
(८) वाममित्यृचि संस्तुतेति ख० ङ० पुस्तकान्तरञ्च।
(९) कक्ष्वतीत्यादि स्तौतीत्याहाश्वलायनः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

---

(क) ऋ० १, ११८, ११। (ख) ऋ० ४, १२, २३।

इन्द्रस्य हरयो ह्यश्वा अग्नेरश्वस्तु[१] रोहितः ॥१२५॥
सूर्य्यस्य हरितश्चैव[२] वायोर्नियुत एव च।
रासभा रोहितो[३]ऽश्विभ्यामजाः[४]पूष्णश्च[५]वाजिनः ॥१२६॥
पृषतो[६]ऽश्वास्तु मरुतां गावोऽरुण्यस्तथोषसः[७]।
सवितुर्वाजिनः श्यावा[८] विश्वरूपा बृहस्पतेः ॥१२७॥
सहैते देवताभिस्तु[९] स्तूयन्ते स्वल्पशो[१०]ऽन्यथा।
आयुधं वाहनं चापि स्तुतौ यस्येह दृश्यते ॥१२८॥
तमेव तु स्तुतं विद्यात्तस्यात्मा बहुधा हि सः।
कनीनका[क]सूक्तशेषो हर्य्योः स्तुति[११]रिहोच्यते।
चत्वार्य्यतस्य विज्ञेयान्यप्रशस्यानि[१२] विद्रधेः[ख] ॥१२९॥
इति बृहद्देवतायां चतुर्थोऽध्यायः।

---

(१) अश्वास्त्विति क० ख० घ० ङ० च०।
(२) प्रोक्ता इति ख० ङ० पुस्तकान्तरञ्च।
(३) रासभो मोहितः इति ख० ङ० पुस्तकान्तरञ्च, रासभौ सहितः इति ग०।
(४) माजाः इति क० घ० च०।
(५) पूषास्त्विति ख० ङ० पुस्तकान्तरञ्च।
(६) एषत्यः इति ङ० पुस्तकान्तरञ्च।
(७) तथोषसामिति ख० ङ० पुस्तकान्तरञ्च।
(८) श्यामा इति क० घ० च०।
(९) चेति ख० ङ० पुस्तकान्तरञ्च।
(१०) स्तूयन्तेऽप्यतेऽन्यथेति क० घ० च०, स्तूयन्तेऽप्यल्पशोऽन्यथेति ग०।
(११) श्रर्धसंस्तुतिरिति क० घ० च०, सूक्तांशेषोऽप्यर्धसंस्तुतिरिति ग०।
(१२) चत्वारि परमाभेयान्याप्रशस्यानीति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ७, २। (ख) ऋ० ४, १२, २३।

## अथ पञ्चमोऽध्यायः ।



प्रेति पञ्चार्भवं चीणि[१] दधिक्राणि पराण्यतः ।
ऋग्द्यावापृथिव्यौ स्तौति दधिक्राव्णां[क] मुखे तु या[२] ॥१॥
परोक्षैरमुतो वाग्भिर्नामभिस्तु स्तुतास्त्रयः ।
अग्निर्वायुश्च सूर्यश्च हंसः शुचिषदित्यृचा[३] ॥२॥
नियुक्ता सूर्य्यदेवत्या हंस इत्यैतरेयके[४] ।
द्वे त्वैन्द्रावरुणे सूक्ते[५] तच[६] चीण्याश्विनाग्निकः[७] ।
अग्रं वायो विहो[ग] त्वेषु[८]वायव्याः सप्त कीर्त्तिताः ॥३॥

---

(१) पञ्चार्भवाणीति ङ० ।

(२) दधिक्राव्नां स्तुतौ हि वामिति ख०, दधिक्राणां मुखे तु येति ग०, दधिक्राणामुतो (ख) हि वामिति ङ० ।

(३) इत्यृचीति क० ग० घ० च० ।

(४) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

(५) द्वे इन्द्रावरुणे इन्द्रादिति ङ० ।

(६) ततः इति ग० ङ० पुस्तकान्तरञ्च ।

(७) आश्विनाग्निकः इति क० ख० ग० घ० च० ।

(८) विहो मां त्वा इति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, ३९, २ । (ख) ऋ० १, २३, १५ ।

(ग) ऋ० ४, ४८, १ ।

वायुः शुनः सूर्य्य एवात्र[१] सीरः[२]
शुनासीरौ[क] वायुसूर्य्यौ[३] वदन्ति ।
शुनासीरं यास्क इन्द्रन्तु मेने
सूर्य्येन्द्रौ तौ मन्यते शाकपूणिः ॥७॥
शुनासीरौ पञ्चम्यां तु स्तुतौ तौ
सीतायै षष्ठी त्वथ सप्तमी च[४] ।
शुनं नः फालाः[ख] कृषिं स्तौति पादः[५]
शुनं कीनाशाः[ग] कृषिजीवान् मनुष्यान्[६] ॥८॥
शुनं पादे पर्जन्यं तृतीये[७]
चौनृषिः कृषिकामो[८]ऽगाद् ।

---

(१) एवात्रेत्यत्र त्ववेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(२) सौर्य्य इति क॰ घ॰ च॰ ।
(३) वायुसूर्य्यमिति क॰ घ॰ च॰ ।
(४) द्वे तु सीतायै षष्ठी सप्तमी चेति क॰ ग॰ घ॰ च॰ ।
(५) पादे इति ङ॰ ।
(६) कृषिजीमनुष्यानिति क॰ घ॰ च॰ ।
(७) स्तुतः पादेऽत्र पर्ज्जन्यस्तृतीये इति क॰ ग॰ घ॰ च॰ ।
(८) अन्त्याम् तृषिर्धर्म्मकामः इति क॰ घ॰ च॰, अन्त्यतृषिर्धनकाम इति ग॰ ।

---

(क) ऋ॰ ४, ५७, ५ । (ख) ऋ॰ ४, ५७, ८ । (ग) ऋ॰ ४, ५७, ८ ।

ऋषिं वा[१] स्तौति सर्व्वं हि सूक्तं
समुद्रादित्यग्नेर्मध्यमस्य ॥९॥
आदित्यं वा ब्राह्मणोक्तं प्रदिष्टं
आग्नेयं[२] यद्वाज्यसूक्तं[३] हि दृष्टं[४] ।
अपां स्तुतिं वा यदि वा घृतस्तुतिं
गवां स्तुतिं वा सूक्त[५]मेतद्वदन्ति ॥१०॥
स्वर्भानुदृष्टं सूर्यस्य अपघ्नत्य[६]तमोऽत्रयः ।
सप्तविंशतिभिः सूक्तैरबोधीत्यग्निमस्तुवन् ॥११॥
त्रैवृष्ण्य[क]स्त्रसदस्युश्च[ख] अश्वमेध इति त्रयः ।
स्तूयमानाः परीक्ष्याः स्युरग्निश्चेते[७] क्वचित् क्वचित्[८] ॥१२॥
ऐक्ष्वाक[९] स्त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः ।

---

(१) ऋषिवदिति क० घ० च० ।
(२) आग्नेयमिति ख० ङ० पुस्तकान्तरञ्च ।
(३) वाप्याज्यसूक्तमिति क० घ० च०, वा प्राज्यसूक्तमिति ग० ।
(४) प्रदिष्टमिति ख० ङ० पुस्तकान्तरञ्च ।
(५) गव्यमेके सौर्य्यमिति क० ग० घ० च० ।
(६) स्वर्भानुदिष्टसूर्य्यस्यापघ्नन् ये इति ख० ङ० पुस्तकान्तरञ्च ।
(७) अग्निश्चेते इति घ० ।
(८) त्रैवृष्ण्यस्त्रसदस्युश्चेति श्लोकः ख० ङ० चिह्नितपुस्तकयोर्न विद्यते ।
(९) ऐक्ष्वाकुरिति क० ग० घ० च० ।

---

(क) ऋ० ५, २७, १ । (ख) ऋ० ४, ३८, १ ।

सञ्जयाद्राम्भरथोस्य[1] वृशो जानः[2] पुरोहितः ॥१३॥
स ब्राह्मणकुमारस्य रथो गच्छञ्छिरोऽच्छिनत्।
एनःस्वित्यब्रवीच्चैव स राजैनं[3] पुरोहितं ॥१४॥
सोऽथर्वाङ्गिरसान्मन्त्रान्[4] दृष्ट्वा सञ्जीव्य तं शिशुं[5]।
क्रोधात्सन्यस्य राजानमन्यं देशं समाश्रितः ॥१५॥
हरोऽथाग्नेर्ननाशाच[6] तस्यापक्रमणादृषेः[7]।
अग्नौ प्रास्तानि हव्यानि[8] न ह्यपच्यत[9] कानिचित् ॥१६॥
ततः प्रव्यथितो राजा अभिगम्य प्रसाद्य च[10]।
आनीला सवृशं जानं[11] पुनरेव पुरोदधे ॥१७॥
स प्रसन्नो वृशोऽन्वैच्छद्धरमग्नेर्नृपक्षये।

---

(१) अस्य रथ्नोस्येति क० घ० च०।
(२) वृशोजानः इति ख०।
(३) राजा तमिति ख० ङ० पुस्तकान्तरञ्च।
(४) सोऽथ वार्शानि सामानीति क० घ० च०, सोऽथर्वा गिरिशान् मन्त्रानिति ख०।
(५) सुतमिति ङ०।
(६) चस्येति ख० ग० ङ० पुस्तकान्तरञ्च।
(७) तस्याप्रक्रमणाद्दृषेरिति क० ग० घ० च०, गुरोरिति ङ० पुस्तकान्तरञ्च।
(८) प्राप्तानि पच्यानीति क० घ० च०, प्रास्तानि प्रक्ष्यानीति ख०, प्रास्तानि चाज्यानीति ङ०।
(९) ह्यपच्यन्तेति पाठः साधुः। न ह्यपचतेति क० घ० च०, यवहन्ते इति ख०, न जीर्यन्ते चेति ङ०।
(१०) तमिति ग० ङ० पुस्तकान्तरञ्च।
(११) आनीय सवृशं यानं इत्येव पाठो भवितुमर्हति।

अविन्दत पिशाचीं च[१] भार्यां तस्य च भूपतेः ॥१८॥
निषण्णः स तया सार्द्धं मासं शां कश्यपावपि[२] ।
तामुपामन्त्रयाञ्चक्रे कमेतं त्वमिति नृपा[३] ॥१९॥
स्वरः[४] कुमाररूपेण नृशस्ता[५]मभ्यभाषत ।
विज्योतिषेति चोक्तायां सहसाग्निरदज्वलत् ॥२०॥
[६]पिशाचीमदहत्तां स यत्र चोपविवेश सा ।
एष एव परामृष्टो भाल्लवी ब्राह्मणो[७]ह्यृचः ॥२१॥
निदानसंज्ञके ग्रन्थे छन्दोगानामिति श्रुतिः[८] ।
भवेदेव परामर्शः सूक्तस्यास्य व्यपेक्षया[९] ॥२२॥
भवन्ति बाल्या मन्त्रा[१०] हि विधिशब्देन[११] चोदिताः ।

(१) तामिति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(२) कपिशावमीति क॰ घ॰ च॰ ।
(३) सुवेतृषेति ङ॰ ।
(४) नरः इति क॰ घ॰ च॰ ।
(५) श्रुवंस्तामिति ख॰ ।
(६) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च, पिशाचीमदहत्तां स इति श्लोकात् प्राक्, सहमानः समायान्तं प्रकाशञ्च प्रकाशयन्नित्य-धिकं श्लोकार्द्धं पठितम् ।
(७) भाल्लाभिब्राह्मणः इति ख॰, भाल्लविब्राह्मणः इति ङ॰ ।
(८) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(९) विवक्षयेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(१०) वाक्यान्येषामिति क॰ ग॰ घ॰ च॰ ।
(११) विधिदृष्टेनेति क॰ ग॰ घ॰ च॰ ।

वृषभस्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥

जामदग्न्यो यथाप्रियः[1] स्तौतीया[2]श्चैतरेयके।

आप्रियः सुसमिद्धाय[3] पञ्चमं सूक्तमत्र तु[4] ॥२४॥

एतद्[5]वैश्वदेवी वा अन्या चैन्द्राग्न्युपोत्तमे।

ऐन्द्राणि द्वादश त्रीणीत्युशना[6]यत्र[7] संस्तुतः ॥२५॥

उशनेति तु पादेन संहयद्रामनेन च[8]।

इन्द्राकुत्सेति चैतस्यां कुत्सेनेन्द्रः स्तुतः सह ॥२६॥

यत्वा सूर्य्येति चान्त्रीणां पञ्चर्चे[9] कर्म्म कीर्त्यते।

[10]त्रैवृष्णस्त्र्यरुणो राजा अश्वमेध ऋणं च यः ॥२७॥

स्तूयमानाः प्रतीच्याः स्युरचिस्वेते क्वचित् क्वचित्।

अनस्वन्तेति सूक्तेऽस्मिन्नाग्नेयेऽत्रिर्मर्हर्षिः स्वयम् ॥२८॥

दानतुष्टः प्रशंसैतान्राजर्षीनिति केचन।

---

(१) जामदग्न्यस्तथैवाज्यः इति क० घ० च०, यथाप्रीय इति ग०।

(२) स्तोकीयाः इति ख० ग० ङ० पुस्तकान्तरञ्च।

(३) आपृप्रः सुसमिद्धायेति क० ग० घ० च०।

(४) अग्निस्त्विति ख० ङ० पुस्तकान्तरञ्च।

(५) एदम्नगिति क० ग० घ० च०, रोदम्नगिति ख०।

(६) द्वादशान्यादीन्युशना इति ङ० पुस्तकान्तरञ्च।

(७) त्वन्नेति क० ख० ग० घ० च०।

(८) उशनेति च पादोऽयं संहयद्रां परस्य यः इति ख०, परस्य यः इत्यत्र परस्यय इति ङ० पुस्तकान्तरञ्च।

(९) पञ्चर्चः इति क० घ० च०।

(१०) त्रैवृष्णस्त्र्यरुणो राजेत्यादि सार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते।

आग्नीरध्येषणात्तेभ्यो अग्निं प्रति च दृश्यते ॥२९॥
अयुतञ्च गवां त्रीणि शतान्यथ च विंशतिः ।
सौवर्णशकटं गोभ्यां त्र्यरुणोऽदान्नृपोऽन्वये ॥३०॥
अश्वमेधशतं चोद्दांस्त्रसदस्युर्धनं बहु ।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥३१॥
आत्मा हितात्मने[१] दद्याद्यशौर्नृपतेर्ऋषिः ।
अत्रेः सुतस्त्वृषिं बभ्रुमार्त्विज्याय वृणाश्च यः ॥३२॥
सहस्रदक्षिणे सोमे वव्रे तं सोऽप्ययाजयत् ।
ददौ तदौशनो राजा सहस्राणि शतानि च ॥३३॥
तस्मै चत्वारि चत्वारि महावीरश्च काञ्चनम् ।
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ॥३४॥
प्रतिगृह्य ऋषिर्गच्छन् मध्यमेनाग्निना पथि ।
पृष्ट इन्द्रेण चाचख्यौ भद्रं चतसृभिश्च तत् ॥३५॥
कोनुवान् वैश्वदेवानि एकादश[२] पराण्यतः[३] ।
मारुतानि दश प्रेति इलाभीत्यृचि तु स्तुता[४] ॥३६॥
द्वितीययाग्न्यया स्तुतः सविता शौनकोऽब्रवीत्[५] ।
उपेति बार्हस्पत्यस्तृचो यो मारुत्यृगुत्तरा ॥३७॥

---

(१) आत्महितात्मने इति पाठः सङ्गतः ।
(२) कोनुवांश्च वैश्वदेवान्येकादशेति क० ।
(३) त्विति ख० पुस्तकान्तरञ्च ।
(४) प्रेवीलाभीत्यृचि तु संस्तुतेति ग०, इलाभि न ऋचा स्तुतेति ख० ङ० पुस्तकान्तरञ्च ।
(५) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

तमुष्टुही तु रौद्री स्यात्[१] प्रसुष्टुतिरिति त्वृचि।
बृहस्पतिः शाकपूणिः पर्जन्याग्नी तु गालवः ॥३८॥
यास्कस्तु पूषणं मेने स्तुतमिन्द्रन्तु शौनकः।
वैश्वानरं भागुरिस्तु माहत्यौषसमाश्विनं[२] ॥३९॥
वायव्याध्वर्यवः सौमी दृग्रेत्यैन्द्री परा तु या[३]।
[४]अग्निं धर्मं पराञ्चन्ति[५] अश्विनौ स्तौत्युगच्छ च ॥४०॥
प्रेति वां पूषणं या चेत्यर्द्धर्चेऽग्निरिहोच्यते।
प्रथमेऽथ द्वितीये च स्तुता एति दिवौकसः ॥४१॥
आवाचं मध्यमां स्तौति ततोऽन्या तु बृहस्पतिं।
[६]ज्याया समिति चादित्यं प्र वो वायुरिहोच्यते ॥४२॥
तं प्रत्नथे[क]ति सौमी वा दैव्यैन्द्री वा प्रजापतेः।
परोक्षवैश्वदेवं तदाह कौषीतकिः स्वयम् ॥४३॥
तेषु तृतीयमित्युक्तं देवान् ऊव[ख] इदं परम्।

(१) त्विति क० ग० घ० च०।

(२) आश्विनीति क० ग० घ० च०।

(३) दृग्रेत्यैन्द्राग्नेसावितीति ङ० पुस्तकान्तरञ्च।

(४) अग्निं धर्ममित्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः।

(५) पराततीति पुस्तकान्तरम्।

(६) ज्यया समिति चादित्यमित्यादि देवान् ऊव इदं परमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(क) ऋ० १, ९६, १। (ख) ऋ० १, १७, ७।

देवानां पत्नीरिति तु [१]देवपत्न्यो द्यृचे स्तुताः ॥ ४४ ॥

अयं चतुर्णामिति चेन्द्रवायू
त्रिभिः स्तुतौ वायवुक्षे[क]ति वायुम् ।
रथं द्यृचा रोदसी स्तूयतेऽत्र
यस्याः स्तुता मरुतो रुद्रपत्न्याः[२] ॥ ४५ ॥

आरुद्रा स इति त्वस्यां रुद्राणां संस्तुतो गणः ।
मरुतान्तु गणस्यैते नाम्ना[३]रुद्रा इति स्तुताः[४] ॥ ४६ ॥
असावग्निरिमौ[५] चोभौ त्वग्नी[६]पार्थिवमध्यमौ[७] ।
यदुत्तमे त्वचेऽर्द्धर्चे इले[ख]ऽग्निं संस्तुतौ द्यृचे ॥ ४७ ॥
मध्यमा वाक् स्त्रियः सर्व्वाः पुमान् मार्द्धश्च मध्यमः ।
गणाश्च सर्व्वे मरुतो गुणभेदात् पृथक् पृथक्[८] ॥ ४८ ॥

(१) चेति ख० ङ० पुस्तकान्तरञ्च ।

(२) क० घ० च० चिह्नितपुस्तकेषु, अयं चतुर्णामितीति श्लोकस्थले, अयं चतुर्णामिति च इन्द्रवायुस्त्रिभिः स्तुतौ । वायुर्द्वितीयथान्त्येका रथान्विति तु रोदसी ॥ इति पाठो वर्त्तते ।

(३) गणस्यैतन्नामेति क० ग० घ० च० ।

(४) स्मृताः इति क० ग० घ० च० ।

(५) अयमिति ङ० पुस्तकान्तरञ्च ।

(६) चोभावग्नी इति ङ० पुस्तकान्तरञ्च ।

(७) पार्थिवमध्यगाविति ख० ।

(८) क० ग० घ० च० चिह्नितपुस्तकेषु, यदुत्तमे त्वचेऽर्द्धर्चे इत्यादिसार्द्ध-श्लोकस्थले अमे मरुद्भिरित्यस्यां मरुद्भिः सह संस्तुताविति श्लोकार्द्धं वर्त्तते ।

(क) ऋ० ७, ३७, ४ । (ख) ऋ० १, १८८, ८ ।

राजर्षिरभवद्दार्भ्यो रथवीति[क]रिति श्रुतः[१]।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४९॥
आत्मानं कार्य्यमर्थं[२]स्य ख्यापयन् प्राञ्जलिः स्थितः।
अवृणीतर्षिमात्रेयमार्त्विज्यायार्चनानसम्[ख] ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये।
श्यावाश्व[ग]श्चात्रिपुत्रस्य पुत्रः स्वल्वर्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्व्ववेदान् यः पित्राध्यापितो मुदा।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्[३]।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत्।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः[४] ॥५३॥
संयुज्यस्व मया राजन्निति याज्यञ्च सोऽब्रवीत्।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते पुत्रीमहं कन्यां श्यावाश्वाय ददामि हि।
अत्रिपुत्रो दुर्बलो हि जामाता त्वावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा ह्यहम्।

---

(१) श्रुतिरिति ङ० पुस्तकान्तरञ्च।

(२) कार्य्यवन्तमिति ङ० पुस्तकान्तरञ्च।

(३) श्यावाश्वश्चात्रिपुत्रस्येति सार्द्धैकश्लोकः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।

(४) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न दृश्यते।

---

(क) ऋ० ५, ६१, १९। (ख) ऋ० ५, ६४, ७। (ग) ऋ० ५, ६१, ५।

नानृषिर्नो हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥
ऋषये दीयतां कन्या वेदस्यां वा भवेत्तथा ।
ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः[१] ॥५७॥
प्रत्याचष्टे स[२] तं राजा सह सम्मन्त्र्य भार्य्यया ।
अनृषिर्नो न[३] जामाता कश्चिद्भवितुमर्हति ॥५८॥
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्त्तत ।
श्यावाश्वस्य तु कन्यायां मनो नैव न्यवर्त्तत[४] ॥५९॥
ततः स्तुतौ[५] निवर्त्याशु तावेतावभिजग्मतुः[६] ।
ग्रामीयमौ[क][७] तरन्त[ख]श्च पुरुमीळ्ह[ग][८]श्च पार्थिवम्[९] ॥६०॥
तरन्तपुरुमीळ्हौ[१०] तु राजानौ वै ददश्यृषी[११] ।
ताभ्यान्तौ चक्रतुः पूजामृषिभ्यां नृपतौ[१२] स्वयम् ॥६१॥

(१) श्यावाश्वाय सुतां दित्सुरित्यादिसार्द्धश्लोकत्रयं क० ग० घ० च०-चिह्नितपुस्तकेषु नेष्यते ।
(२) प्राबोचत्तथैवेति ख० ङ० पुस्तकान्तरञ्च ।
(३) नैवेति ग० ।
(४) न स्म निवर्त्तते इति ख० ङ० पुस्तकान्तरञ्च ।
(५) ततस्तौ त्विति क० ग० घ० च० ।
(६) ततः स्तुतौ निवर्त्तेन उभावेवाभिजग्मतुरिति ख० ङ० पुस्तकान्तरञ्च ।
(७) ग्रामीयसौति ङ० पुस्तकान्तरञ्च ।
(८) पुरुमीढमिति ङ० ।
(९) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितं ।
(१०) तरन्तपुरुमीढाविति ङ० पुस्तकान्तरञ्च ।
(११) ददृशिनाविति क० घ० च० ।
(१२) तु पतिरिति क० घ० च० ।

(क) ऋ० ५, ६१, ६। (ख) ऋ० ९, १०५, ११। (ग) ऋ० ८, ७१, १४।

ऋषिपुत्रं महिष्याश्च दर्शयामास तं[१] नृपः।
तदन्तानुमतेनैव[२] प्रादाद्बहुविधं वसु ॥६२॥
अजाविकं गवाश्वञ्च श्यावाश्वाय श्रशीयसी[३]।
अर्चि[४] याज्यार्चितौ गत्वा पितापुत्रौ स्वमाश्रमम् ॥६३॥
अभ्यवादयतामर्चि[५] महर्षिं दीप्ततेजसम्।
श्यावाश्वस्य मनस्यासीन्मन्त्रस्यादर्शनाद्दहम् ॥६४॥
न लब्धवानिमां कन्यां हन्त सर्व्वाङ्गशोभनाम्।
अप्यहं मन्त्रदर्शी स्यां भवेद्धर्षो महान् मम ॥६५॥
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः[६]।
ददर्श संस्थितान् पार्श्वे तुल्यरूपान्महात्मनः[७] ॥६६॥
समानवयसश्चैव[८] मरुतो रुक्मवक्षसः।
तांस्तुल्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ॥६७॥
श्यावाश्वो विस्मितोऽपृच्छत्केष्वेति[९] मरुतस्तदा।

(१) वै इति ख० ङ०।

(२) तदन्तानुमता चैवेति क० ग० घ० च०।

(३) श्रसीयसीति ङ० पुस्तकान्तरञ्च।

(४) तौ त्विति पाठः सङ्गतः।

(५) अभ्यवादयतातत्तमिति ङ० पुस्तकान्तरञ्च।

(६) अर्चि याज्यार्चितौ गत्वेत्यादि प्रादुरासीन्मरुद्गणः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(७) तुल्यरूपानिवात्मनः इति क० ख० ग० घ० च०।

(८) चैवमिति ङ० पुस्तकान्तरञ्च।

(९) के स्थेति पाठः समीचीनः। केष्ठेतीति क०, कोष्ठेतीति ङ०।

ततस्तु मरुतो देवानृषिस्तानन्वबुध्यत[1] ॥६८॥
य ईं वहन्त इत्यृग्भिः षड्भि[2] स्तुष्टाव तांस्तथा ।
अतिक्रमं हितस्तूर्षिर्मेने विपुलमात्मनः ॥६९॥
यस्य[3] दृष्ट्वेव तुष्टाव यच्च[4] केष्वेति[5] पृष्टवान् ।
स्तुताः स्तुत्यानया प्रीता गच्छन्तः पृश्निमातरः[क] ॥७०॥
अवमुच्य स्ववक्षोभ्यो[6] रुक्मं तस्मै तदा ददुः ।
मरुत्सु तु प्रयातेषु श्यावाश्वस्तु महायशाः[7] ॥७१॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा ।
स सद्य ऋषिरात्मानं विवचूरथवीतये[8] ॥७२॥
एतं मे स्तोममित्यृग्भ्यां[9] दौत्ये[10] रात्रीं न्ययोजयत् ।
रथवीतिं तपस्यन्तं[11] सम्प्रेक्ष्यार्षेण चक्षुषा ॥७३॥

---

(१) रुद्रसूनूनबुध्यतेति क० ग० घ० च० ।
(२) बुद्धेति क० ग० घ० च० ।
(३) याम्न इति क० घ० च० ।
(४) यांस्तेति क० ग० घ० च० ।
(५) केष्टेतीति क०, केष्ठेतीति ङ० ।
(६) अमुच्यत स्वकण्ठेभ्यः इति ख०, व्यामुच्यते स्वकण्ठेभ्यः इति ङ० ।
(७) महातपाः इति ख० ङ० पुस्तकान्तरञ्च ।
(८) प्रवच्यश्वथवीतये इति क० ग० घ० च० ।
(९) इत्याभ्यामिति क० ग० घ० च० ।
(१०) दूत्ये इति ख० पुस्तकान्तरञ्च ।
(११) रथवीतिमपश्यन्तीमिति ख० ङ० ।

(क) ऋ० १, २३, १० ।

रम्ये हिमवतः पृष्ठ एषचेतीति चाब्रवीत्।
ऋषेर्नियोगमाज्ञाय देव्या राज्ञा प्रचोदितः।
आदाय कन्यां तां दार्भ्य उपेयायार्चनानसम् ॥७४॥
पादौ तस्योपसङ्गृह्य स्थितः[१] प्रह्वः कृताञ्जलिः।
रथवीतिरहं दार्भ्य इति नाम शशंस च ॥७५॥
मया सङ्गति[२] मिच्छन्तं त्वां प्रत्याचक्षि यत्पुरा।
तत् क्षमस्व नमस्तेऽस्तु मा च मे भगवन् क्रुधाः[३] ॥७६॥
ऋषेः पुत्रः स्वयमृषिः[४] पितासि भगवन्नृषेः।
हन्त प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत्[५] ॥७७॥
पाद्यार्घ्यमधुपर्कैश्च पूजयित्वाथ तं[६] नृपः।
शुक्लमश्वशतं दत्त्वा अनुजज्ञे गृहान् प्रति ॥७८॥
शशीयसीं[७] तरन्तञ्च पुरुमीळ्ह[८]ञ्च पार्थिवम्।
षड्भिः सनदिति स्तुत्वा जगामर्षिरपि स्वयम्[९] ॥७९॥

---

(१) स्थित्वेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) संयोगमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) क्रुधः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) चर्षिरिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) स्नुषान्तेऽस्त्विति चाब्रवीदिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) चार्चनाना स्वयमिति क॰ घ॰ च॰।
(७) शसीयसीमिति ङ॰ पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ङ॰ पुस्तकान्तरञ्च।
(९) त्वयमिति क॰ ग॰ घ॰ च॰।

ऋतेन मैत्रावरुणान्येकादशपराणि तु ।
षडाश्विनानि[1] गर्भार्था पञ्चर्चूपनिषत्स्तुतिः[2] ॥८०॥
सप्तकृत्वोऽपराधे तु[3] विफले दारसंग्रहे ।
ऋषिः कृतो[4]ऽश्वमेधेन भारतेनेति वै श्रुतिः[5] ॥८१॥
ततोऽष्टमे[6]ऽपराधे तु वृत्रद्रोण्यां स पार्थिवः ।
ऋषिं[7]सेह[8] विनिश्चित्य स्कन्नं रात्रौ न्यधारयत्[9] ॥८२॥
सोऽश्विनाविति सूक्तेन तुष्टावर्षिः शुभस्पती ।
तौ तं तस्मात् समुद्धृत्य चक्रतुः सफलं पुनः ॥८३॥
वचस्तस्यैव गर्भार्थं स्वपत[10]स्तस्य गर्भवत् ।
यथा वात इति ज्ञेये त्वश्विभ्यामितरे ऋचौ[11] ॥८४॥

(१) सत्ताश्विनानीति क० ग० घ० च० ।
(२) गर्भार्थं पञ्चर्चोपनिगत्स्तुतिरिति ग० । स्तुतिरित्यत्र तुवीति क० घ०, तुमीति च० ।
(३) सप्त कृत्वापराधान् वै इति क० घ० च०, सप्तकृत्वोऽपराधान् वै इति ग० ।
(४) ततः इति ङ० पुस्तकान्तरञ्च, ऋषीं कृत्वेति ग० ।
(५) नः श्रुतमिति ङ० पुस्तकान्तरञ्च ।
(६) तमष्टमे इति क० ग० घ० च० ।
(७) ऋषीनिति ङ० पुस्तकान्तरञ्च ।
(८) ऋषीसेना इति घ० च० ।
(९) रात्रौ रात्रौ न्याधावयदिति क० घ० च० ।
(१०) चित्रस्तस्यैव गर्भार्थंस्तपतः इति ङ० पुस्तकान्तरञ्च ।
(११) ज्ञेयावश्विभ्यामितरौ ह्यृचाविति ख० ङ० पुस्तकान्तरञ्च ।

स्रवतामपि गर्भाणां दृष्टं तदनुमन्त्रणम् ।
भाववृत्तं तु तत्तस्यास्तथारूपं हि दृश्यते ॥८५॥
जरायुर्गर्भशब्दाभ्यामेतद्रूपं हि दृश्यते[१] ।
मह्ये उपस्ये[२] सावित्रं युञ्जतेच्छावदः[३] स्तुतः ॥८६॥
पर्जन्यो वलिति त्वस्मिन्[४] पृथिवी मध्यमा तु[५]वाक्[६] ।
अद्या नो देवसवितरियं दुःस्वप्ननाशिनी[७] ॥८७॥
वारुणन्तु प्रससाजे षट्कमैन्द्राग्रमुत्तरम्[८] ।
विष्णुं न्यङ्ग[९]न्यरञ्जेति मारुतं सूक्तमुत्तरम्[१०] ॥८८॥
एतया मरुदाख्यातं द्यौर्नेन्द्रे प्रतिपूर्व्वकम्[११] ।

---

(१) स्रवतामपि गर्भाणामित्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु नापलभ्यत ।

(२) मह्यौपस्थेतीति क० घ० च० ।

(३) सावित्रे युञ्जतेच्छेति वै इति क० ग० घ० च० ।

(४) पर्ज्जन्यस्तु बलित्थेतीति ङ० पुस्तकान्तरञ्च ।

(५) त्विति ग० ।

(६) स्तुतेति ङ० पुस्तकान्तरञ्च ।

(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

(८) उत्तरमित्यत्र उत्तममिति क०, इन्द्राग्नैन्द्राग्नमुच्यते इति ख०, मिन्द्राग्नैन्द्राग्नमुच्यते इति ङ० पुस्तकान्तरञ्च ।

(९) विष्णुं चिङ्कमिति ङ० पुस्तकान्तरञ्च ।

(१०) उत्तममिति ख० ।

(११) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

आशीःसूक्तमाशीर्वादस्तु[१] स्त्रीपुत्राणां पराणि तु[२]। ८९॥
तस्यादा[३]लक्ष्म्यपनुद[४] मग्निस्तत्र[५] निपातभाक्।
प्रजावान् जीवपुत्रो[६] वा गर्भकर्म्मणि संस्तुतौ ॥९०॥
नानारूपाः पयस्विन्यः[७] संस्रवन्तीति संस्तुताः[८]।
आशीर्वादेषु संज्ञासु कर्म्मसंस्थासु देवताः[९] ॥९१॥
निपातभाग् लिङ्गवाक्यात्[१०] परीक्षेतेह मन्त्रवित्।
मन्त्रप्रयोगमन्त्रयोः[११] प्रयोगो[१२] बलवत्तरः ॥९२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्येति ङ० पुस्तकान्तरञ्च।
(२) स्त्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, स्त्रीः पुत्राणां पराश्च षट् इति ङ० पुस्तकान्तरञ्च।
(३) तस्यादेति क० घ० च०।
(४) लक्ष्म्यपनिर्नोदः इति क० घ० च०, स्यात्तामलक्ष्मीं परेर्नादे इति ख०, अलक्ष्म्यपनिर्नोदे इति ङ० पुस्तकान्तरञ्च।
(५) स्वत्रेति ख० ङ०।
(६) प्रजावज्जीवपुत्रः इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ०।
(७) यथाश्विन्यः इति ख० ग०।
(८) संस्तुताविति ङ०।
(९) कर्म्मसंस्था तु देवतेति ख०।
(१०) लिङ्गवाक्येत ख० ग०।
(११) मन्त्रप्रयोगमन्त्राभ्यामिति ग०।
(१२) प्रयोगे इति ग०।

